# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४३ वर्षे
१-२ अङ्कौ

ज्येष्ठ–भाद्रपदपूर्णिमे
जून–सितम्बर, १९८८ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी



४३ वर्षे
१-२ अङ्कौ

वार्षिकं मूल्यम्—३० रूप्यकाणि
जून-सितम्बर, १९८८

# प्ररोचना

**'सारस्वती सुषमा'**-पत्रिकायाः त्रिचत्वारिंशद्वर्षस्य प्रथमद्वितीयाङ्कौ प्रकाशमानीयेते। अस्मिन् संयुक्ताङ्के **आचार्यश्रीगोविन्दचन्द्रपाण्डेयमहोदयैः** लिखितः **'अस्ताचलीयम्'** इत्याख्यो मुक्तकसङ्ग्रहः सन्निविष्टः, अथ च **आचार्यश्रीरामप्रसादत्रिपाठिमहोदयानां** गभीरो निबन्धः **'शैवागमदृष्ट्या मन्त्र-भाव-मुद्रा-पाशादि-विमर्शः'**, **डॉ० सङ्गमलालपाण्डेयमहाभागानामाधुनिकविषयमवलम्ब्य 'अस्तित्व-वादसमीक्षा'** इत्याख्यौ निबन्धौ सन्निविष्टौ। उभौ निबन्धौ गहनौ नवनवोन्मेषशालिनौ च। **एवमेवाचार्यश्रीकरुणापतित्रिपाठिमहोदयैः** प्रणीतः **'काश्यां मरणान्मुक्तिः'** इत्याख्यो निबन्धो विमर्शपूर्णोऽथ च शास्त्रीयगवेषणापरिप्लुतश्च। अन्येषु निबन्धेषु शब्दसाहित्यशास्त्रविचारो ग्रथितः।

अस्याः पत्रिकाया अनयोरङ्कयो रचनायां येषां येषां विदुषां सहयोगः प्राप्तः, तेभ्यः सर्वेभ्यः साधुवादान् प्रयच्छामि।

मन्ये, अङ्काविमौ विदुषाम्, अनुसन्धानकर्तॄणाञ्च कृते महते उपकाराय भविष्यत इति।

**वाराणस्याम्**
श्रीरामनवम्याम्,
२०४९ वैक्रमाब्दे
(११।४।१९९२ खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४३ वर्षे | ज्येष्ठ–भाद्रपदपूर्णिमे, वि० सं० २०४५ | १–२ अङ्कौ |
|---|---|---|


## शैवागमदृष्ट्या मन्त्र-भाव-मुद्रा-पाशादिविमर्शः


**आचार्यश्रीरामप्रसादत्रिपाठी**
सम्मानितप्राध्यापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणसी


❀ ❀ ❀

### मन्त्रस्वरूपविमर्शः

मन्त्रतत्त्वस्वरूपाया मातृकाया ज्ञानमन्तरा काऽपि साधना कोऽप्युपायः सिद्धिं नैव प्राप्नोति । उक्तञ्च—

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः ।
सर्वं तस्य वृथा देवि ! किं तस्य जपपूजनैः[1] ॥
येऽभ्यस्यन्ति महातन्त्रं बालाद्वा मन्त्रतोऽपि वा ।
यामलं नाम वक्त्राम्भोरुहसुन्दरसम्भवम् ॥
अतिगुह्यं महागुह्यं शब्दगुह्यं निराकुलम् ।
नानासिद्धिसमुद्राणां गृहं योगमयं शुभम् ॥
शास्त्रजालस्य सारं हि नानामन्त्रमयं प्रियम् ।
वाराणसीपुरपतेः सदामोदं सुखास्पदम्[2] ॥

---

१. कामधेनुतन्त्रे—१।४ ;  २. रु० या० १।८४-८६ ।

तन्त्रशास्त्रे मनुशब्दोऽपि मन्त्रपर्यायत्वेन प्रयुज्यते[1] । स्त्रीदेवत्याश्च मनवो विद्यापदेन संकीर्त्यन्ते ।

मननत्राणधर्माणश्चिन्माहात्म्यावमर्शका मन्त्रा भवन्ति । 'मननात् त्रायत इति मन्त्रः' इति व्युत्पत्तिरपि निगूढमर्थं 'मन्त्रि गुप्तभाषणे' इति चौरादिकाद्धातोर्भावे घञ्प्रत्यये कृते सति मन्त्रणं मन्त्रो गुप्तभाषणमित्यर्थ इत्यपि व्युत्पत्तिलभ्योऽर्थः सम्मान्यते । अत एव गुप्तार्थभाजः पिण्डबीजरूपाः पुरुषावाच्याध्यासिताश्च मन्त्रा भवन्ति इत्यपि वर्तत उद्घोषः । त एव मन्त्राः संवेद्यमानस्फुटार्थरूपा मालामन्त्राः स्त्रीरूपवाच्याध्यासिताश्च सन्तो विद्यापदाभिधेया भवन्ति । मन्त्रा आणवशाक्तशाम्भवोपायसम्बन्धिन इत्यपि केचित् । मृत्युञ्जयभट्टारकेण तु संसाराद् मोचकत्वं परे शिवे संयोजकत्वं च मन्त्राणां स्वभाव उक्तः, तथा च—

मोचयन्ति च संसाराद् योजयन्ति परे शिवे ।
मननत्राणधर्मित्वात् तेन मन्त्रा इति स्मृताः[2] ॥

नेत्रतन्त्रेऽप्ययं विषयः सम्यक् प्रपञ्चितोऽस्ति[3] ।

## भावादिहीनमन्त्राणां सिद्धिप्रदत्वाभावः

भाव-ध्यान-निराहार-नित्यस्नान-जितेन्द्रियत्व-शास्त्रनिगूढार्थवेतृत्वप्रभृतिधर्महीना मन्त्रजन्यसिद्धिषु अक्षमा भवन्ति, तथा चोक्तं रुद्रयामले—

मन्दभाग्यः पशोर्योनिं प्राप्नोति मां विहाय सः ।
मयि भावं यः करोति दुर्लभो जनवल्लभः ॥
भावेन लभ्यते सर्वं भावेन देवदर्शनम् ।
भावेन परमं ज्ञानं तस्माद् भावावलम्बनम् ॥
भावश्च सर्वशास्त्राणां गूढं सर्वेन्द्रियस्थितम् ।
सर्वेषां मूलभूतं च देवीभावं यदा लभेत् ॥
तदैव सर्वसिद्धिश्च तदा ध्यानदृढो भवेत् ।
अकलङ्को निराहारी निवासधृतमानसः ॥
नित्यस्नानाभिपूजाङ्गो भावी भावं यदा लभेत् ।
क्रियादक्षो महाशिक्षानिपुणोऽपि जितेन्द्रियः ॥
सर्वशास्त्रनिगूढार्थवेत्ता न्यासविवर्जितः ।
तेषां हस्तगतं भावं वद भावं यथा तनौ[4] ॥

---

१. "सधवा स्वप्रकृत्या च ददाति यदि तन्मनुम्" । (रुद्रयामले—२।११)
२. मृत्युञ्जय० २१।७५-७६ ।
३. नेत्रतन्त्रे मृत्युञ्जयभट्टारके एकविंशाधिकारे (२१।१) ।
४. रुद्रयामले—१।११२-११७।।

नेत्रतन्त्रेऽप्ययं विषयो विस्तरेण प्रकाशितोऽस्ति । तथा हि—

भावहीनास्तु ये मन्त्राः शक्तिहीनास्तु कीलिताः ।
वर्णमात्राविहीनास्तु गुर्वागमविवर्जिताः ॥
भ्रष्टाम्नायविहीना ये आगमाज्झितविघ्निताः ।
न सिध्यन्ति यदा देवि जप्ता इष्टाः सहस्रशः ॥
असिद्धा रिपवो ये च सर्वांशकविवर्जिताः ।
आद्यन्तसम्पुटेनैव साध्वर्णेन तु राधिताः[१] ॥

अत्र रुद्रयामले भावस्य त्रैविध्यं दर्शितमस्ति । तथा हि—

पशुभावं महाभावं भावानां सिद्धिदं पुनः ॥
आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम् ।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥
तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम् ।
फलाकाङ्क्षी मोक्षगश्च सर्वभूतहिते रतः[२] ॥

## भावत्रयस्य फलविमर्शः

एतस्य भावत्रयस्य फलत्रयमपि तत्रैव क्रमेण वर्णितमस्ति । तद्यथा—

विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः ।
कुर्याद् भावत्रयं दिव्यं भावसाधनमुत्तमम् ॥
भावेन लभते वाद्यं धनं रत्नं महाफलम् ।
कोटिगोदानजैः पुण्यैः कोटिशालग्रामदानजैः ॥
वाराणस्यां कोटिलिङ्गपूजनेन च यत्फलम् ।
तत्फलं लभते मर्त्यः क्षणादेव न संशयः[३] ॥

## भावत्रितयसाधने कालविमर्शः

प्रातःकाले दशदण्डात्मकः कालः पशुभावस्य, मध्याह्ने दशदण्डात्मकः कालो वीरभावस्य (महाभावस्य), सायाह्ने दशदण्डात्मकः कालो दिव्यभावस्येति विज्ञेयम्[४] ।

## भावत्रयस्य पुनः स्वरूपवर्णनम्

भावस्तु त्रिविधो देवि ! दिव्यवीरपशुक्रमात् ।
गुरुरस्य त्रिधा चात्र तथैव मन्त्रदेवताः ॥
दिव्यभावो महादेव श्रेयसां सर्वसिद्धिदम् ।
द्वितीयो मध्यमः प्रोक्तः तृतीयः सर्वनिन्दितः ॥

---

१. नेत्रतन्त्रे—८।५९-६२;     २. रु० या० ६।५१-५३ ।
३. तत्रैव—६।५४-५६;     ४. तत्रैव—६।५७-५८ ।

बहुजपात्तथा होमात् कामक्लेशादिविस्तरैः ।
न भावेन विना देवि ! तन्त्रमन्त्राः फलप्रदाः[1]॥

एभिः पद्यैर्भावस्य तन्त्रमन्त्रसम्बन्धिफलदायकत्वं श्रेयः प्रेय उभयविधसिद्धिप्रदत्वम्, दिव्यभावस्य वीरभावस्य तदपेक्षया ईषन्न्यूनत्वम्, तृतीयस्य पशुभावस्य उक्तोभयापेक्षया निकृष्टत्वं मन्यते ।

**मन्त्रेषु दशधा दोषोत्पादनम्**

कीलनेन ( अन्यादृशत्वापादनेन ), भेदनेन ( साध्यसाम्मुख्यत्यागेन ), मौनेन (निर्वीर्यीकरणेन), जम्भनेन (कार्यकरणासाध्यसामर्थ्याधानेन), स्तम्भनेन (निश्चेष्टत्वापादनेन), प्रत्यङ्गिरत्वेन (भूतादिदमनप्रयुक्तस्य मन्त्रस्य प्रयोक्तारं प्रति विरुद्धकारित्वेन), सन्त्रासेन, ताडनेन, रिपुत्वकरणेन, सर्वहानिविधायित्वेन, एभिर्दशसंख्याकैः प्रकारैर्मन्त्राणां सामर्थ्यं क्षीयते । अतः सुगुप्ते स्थाने जपहोमादिकं विधेयम् । उक्तञ्च—

कीलनं चैव मन्त्राणां भेदनं मोहनं तथा ।
सन्त्रासं ताडनं चैव जम्भनं स्तम्भनं तथा ॥
रिपुत्वकरणं चान्यत् प्रत्यङ्गिरत्वमेव हि ।
सर्वहानिविधायित्वं क्रियते दुर्मन्त्रिभिः ॥
एवं दशप्रकारेण प्रवर्तन्ते हि हिंसकाः[2] ॥

**नवविधं मन्त्रदोषनिवारणम्**

मन्त्राणामुक्तदशविधदोषाणामपनयनाय नव प्रकाराः शास्त्रे उक्ताः । ते च—

दीपनं बोधनं चैव तापनं चाभिषेचनम् ।
विमलीकरणं चैव तथेन्धननिवेशनम् ॥
सन्तर्पणं गुप्तिभाव आप्यायो नवमस्तथा ।
एवं नवप्रकारेण मन्त्रवादमशेषतः ॥
यो जानाति स जानाति मन्त्रसाधनमुत्तमम्[3] ॥

अयमाशयः—दीपनं मन्त्रस्य प्रणवेन । बोधनं नमःशब्देन । ताडनं फट्कारेण । अभिषेचनं वौषट्कारेण । विमलीकरणं स्वाहाशब्देन । इन्धननिवेशनं दाह्यपाशविषादिदहने विनियोजनम्, तच्च हुंकारेण सम्पुटीकरणम् । तर्पणं बलवत्ताधानम्, तच्च प्रतिवर्णं लांकारेण सम्पुटीकरणम् । गुप्तिभावो रक्षणम्, तच्च नेत्रनाथसम्पुटीकृतस्य अयुतजपाद् भवति । आप्यायनं पुनर्जातबलस्य पुष्टयाधानम्, तच्च वांकारेण प्रतिवर्णं सम्पुटीकरणम् ।

शारदातिलकेऽपि एष विषयो मन्त्राणां दशविधसंस्कारप्रदर्शनमुखेन प्रतिपादितोऽस्ति[4] ।

---

१. रु० या० ६।७१-७३; २. ने० त० ६।३३-३५ ।
३. तत्रैव—१८।६-८; ४. शा० ति० २।११२ ।

### एकादशधा विनियुक्ता मन्त्राः सिद्धिप्रदाः

सुगुप्ते स्थाने दोषपरिहार-गुणाधानपूर्वकं जपक्रियायां विनियुक्ता मन्त्राः सिद्धि प्रयच्छन्ति । तत्र विनियोगे एकादशप्रकारा उक्ताः । तथा हि—

सम्पुटं ग्रथितं ग्रस्तं समस्तं च विदर्भितम् ।
आक्रान्तं च तथाद्यन्तं गर्भस्थं सर्वतो वृतम् ॥
तथा युक्तिविदर्भं च विदर्भग्रथितं तथा ।
इत्येकादशधा मन्त्रा नियुक्ताः सिद्धिदाः स्मृताः[१] ॥

आद्यन्तयोर्मन्त्रन्यासः सम्पुटवत् । प्रत्यर्णं मन्त्रसम्पुटीकारो ग्रथनम् । मध्यस्थस्य नाम्नो दिक्चतुष्टये मन्त्रनिवेशो ग्रस्तम् । मन्त्रादनन्तरं नाम पुनरप्येवमिति समस्तम् । नामान्तरं सकृन्मन्त्र इति विदर्भणम् । मध्यस्थस्य नाम्नो मन्त्रो यदि वेष्टनया न्यस्त आक्रान्तम् । मन्त्रादनन्तरं नाम, ततस्त्रिर्मन्त्र इत्याद्यन्तम् । मध्यस्थस्य मन्त्रस्य चतुर्दिक्कं साध्यनामन्यासो गर्भस्थत्वम् । मन्त्रस्य आद्यन्तयोः साध्यनामनिवेशः सर्वतोवृतत्वम् । पश्चान्न्यस्तमन्त्रस्य नाम्नश्चतुर्निवेशो युक्तिविदर्भणम् । नाम्नः पश्चाच्चतुर्मन्त्रन्यासो विदर्भग्रथनम् ।

नेत्रतन्त्रव्याख्यायामेतत्सर्वं स्फुटीकृतं द्रष्टव्यम्[२] । शारदातिलकेऽपि प्रकारान्तरेणायं विषयः प्रतिपादितोऽस्ति[३] ।

### मन्त्राणां सिद्धत्वादिभेदास्तज्ज्ञानोपायाश्च

सिद्धं साध्यं सुसिद्धं च तथैवारित्वमेव च ।
ज्ञात्वा सर्वमशेषेण मन्त्रन्यासं समाचरेत्[४] ॥

अनेन नेत्रतन्त्रोक्तपद्येन ज्ञायते यत् साधकेन सिद्धं साध्यं सुसिद्धं चैव मन्त्रतत्त्वं ज्ञात्वा मन्त्राराधने न्यासः करणीयः ।

स्वच्छन्दतन्त्रे सिद्धादिमन्त्राणां ज्ञानोपायः प्रतिपादितः, तथा च—

मन्त्राक्षरं तु विश्लेष्य मात्राबिन्दुसमन्वितम् ।
आत्मनामाक्षरं तद्वदधोभागेऽस्य योजयेत् ॥
आत्मवर्णात् समारभ्य यावन्मन्त्रार्णमागतम् ।
यस्मिन् समापयेद् देवि तमायं परिकल्पयेत् ॥
रेखाङ्गुलिगतं तं तु कथयामि समासतः ।
पर्वणि प्रथमे सिद्धः साध्यश्चैव द्वितीयके ॥
तृतीयेऽपि सुसिद्धः स्यादरिर्ज्ञेयश्चतुर्थके ।
अरिसाध्यौ परित्यज्य दातव्यश्चुम्बकेन तु ॥
सिद्धश्चैव सुसिद्धश्च भुक्तिमुक्तिफलप्रदः[५] ।

---

१. ने त० १८।१०-१२;  २. तत्रैव ;  ३. शा० ति० २३।१३६ ।
४. ने० त० १८।१२-१३;  ५. स्व० त०, पृ० ८।२४ ।

## मन्त्राणामुदयादिज्ञानजं सर्वज्ञत्वम्

मन्त्रमाराधयतः साधकस्य मन्त्रस्योदयास्तमयव्याप्त्यादिकं परिजानतः सर्वज्ञत्वं प्रकटति। तथा चोक्तम्—

उदयास्तमयौ व्याप्तिं ध्यानं मुद्रां स्वरूपतः।
यो वेत्त्येवं स सर्वज्ञः सर्वकृत् साधकोत्तमः[1]॥

उदयास्तमयौ उन्मिषत्ताविश्रान्ती हृद्द्वादशान्तपादयोः। व्याप्तिं वीर्यम्। मन्त्राणां ध्यानं मन्त्रविषयम्। तदुचितामेव च मुद्राम्। स्वरूपत इति दीर्घात्मना स्वरूपेण, अर्थरत्नावल्यां श्रीमूलविद्याया वाग्भवबीजस्योदयो मूलाधारे, मूलादिब्रह्मरन्ध्रान्तं व्याप्तिः, विश्रान्तिस्तु जिह्वाग्रे[2]। पुनश्च कामराजबीजस्योदयो मूलाधारे, भ्रूमध्यान्ते व्याप्तिः, विश्रान्तिर्ब्रह्मरन्ध्रे प्रदर्शिता[3]। उत्तरषट्के तु—

आधारे उदयो देवि लयो हृदय उच्यते।
विश्रामं ब्रह्मरन्ध्रे तु त्रिलक्षं परिकीर्तितम्॥

इत्येषोऽर्थः प्रतिपादितोऽस्ति।

## मन्त्राणां शिवशक्त्यात्मरूपत्वम्

नेत्रतन्त्रे मन्त्राः शिवशक्त्यात्मरूपत्वेन प्रतिपादिताः। तथा च—

यत्तेषां सर्ववेदित्वं सर्वशक्तित्वमेव च।
तच्छिवत्वं समाख्यातं शक्तित्वे सर्वकर्तृता॥
सर्वानुग्रहकर्तृत्वं सर्वत्र फलदायकम्।
आत्मत्वं तत्स्वरूपं तु त्रिविधं साधनं स्मृतम्[4]॥

साधकस्य समक्षं मन्त्राः पञ्चधाऽवतिष्ठन्ते। तथा च—

स्पर्शनं चावलोकश्च सम्भाषा बिन्दुदर्शनम्।
स्वयमावेशनं चैव मन्त्राणां पञ्च लक्षणम्॥

अस्यार्थोऽस्मिन्नेव उत्तरषट्के प्रदर्शितोऽस्ति[5]। एवं चाणवशाक्तशाम्भवोपायसम्बन्धिनो मन्त्राः स्वयमेवान्ततः शिवशक्त्यात्मरूपतया साधकं स्वात्मानं प्रत्याययन्ति इति तत्त्वम्। अस्यां स्थितौ विशाधिकारे मृत्युञ्जयभट्टारके यदुक्तम्—

यदीच्छेदुत्तमां सिद्धिं मोक्षं वा शाश्वतं ध्रुवम्।
मन्त्रवादो न कर्तव्य इत्याह परमेश्वरः॥

तत्तु काम्यप्रयोगेषु मन्त्रवादाश्रयनिषेधपरतया ज्ञातव्यम्।

---

१. ने० त० १८।१३-१४; २. अर्थ०, पृ० २३१; ३. तत्रैव—पृ० २४७। ४. ने० त० २१।७८-८०, ५. उ० ष०, पृ० २५१।

## मन्त्रार्थमन्त्रचैतन्ययोर्विमर्शः

मन्त्रार्थ-मन्त्रचैतन्य-योनिमुद्राणां परिज्ञानमन्तरा मन्त्रसिद्धिर्नैव जायते। तदुक्तम्—

मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः।
न सिध्यति वरारोहे कल्पकोटिशतैरपि[१] ॥

तन्त्रग्रन्थेषु मन्त्रदेवतैव मन्त्रचैतन्यतया व्याख्याता[२]। मन्त्राणामर्थश्चावश्यं ज्ञातव्यः। निरुक्तेऽपि—"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्[३]" इत्येवमर्थज्ञानमहिमा वर्णितोऽस्ति। योगिनीहृदये मन्त्रसङ्केतपटले श्रीविद्यायाः षड्विधो मन्त्रार्थः प्रदर्शितः। तथा च—

मन्त्रसङ्केतकस्तस्या नानाकारो व्यवस्थितः।
नानामन्त्रक्रमेणैव पारम्पर्येण लभ्यते ॥
षड्विधं तं तु देवेशि कथयामि तवानघे।
भावार्थः सम्प्रदायार्थो निगमार्थश्च कौलिकः।
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च[४] ॥

अयमाशयः—आदिशक्तेस्तस्या मन्त्रसङ्केतको नानाकारः। तदीयविद्यायाः साङ्केतिकार्थः षट्प्रकारकः; परन्तु तस्या मन्त्रो नैकः, येनैकस्यैव मन्त्रस्य षडर्थाः स्युः; किन्तु नानाविधो मन्त्रो लोपामुद्राकामराजादिभेदात्। अतश्च केचनार्थाः कादिविद्यायाः, केचिद् हादिविद्यायाः, केचित्तूभयसाधारणाः। संहृत्य षड्विधः सङ्केतः। तत्र कस्या विद्यायाः कोऽर्थ इति तु पारम्पर्यक्रमेणैव लभ्यते। श्रीभास्कररायेण वरिवस्यारहस्ये पञ्चदशविधोऽर्थः प्रदर्शितः। श्रीविद्याया अक्षरार्थस्तु सौभाग्यसुधोदये द्वितीये प्रपञ्चे विस्तरेण निरूपितः। मन्त्रार्थस्य मन्त्रचैतन्यस्य स्वरूपं महत्त्वं च विस्तरेण वर्णितं रुद्रयामले। तथा हि—

मन्त्रार्थं मन्त्रचैतन्यं निजविग्रहरक्षणम्।
मन्त्राणां मन्त्रचैतन्यं विषयाणि शृणु प्रभो ॥
मणिपूरे स्वनायासे यत्प्रसादात् स्थिरो भवेत्।
एतत्करणमात्रेण योगी भवति निश्चितम्[५] ॥ इत्यादि।

## मुद्रास्वरूपविमर्शः

तन्त्रशास्त्रे मुद्राया महनीयं महत्त्वं वर्णितमस्ति। "तत्स्वरूपमज्ञात्वा तदननुष्ठानेन मन्त्रसिद्धिर्न सम्भवति" इति पूर्वमुक्तमेव, अतश्च मुद्रास्वरूपनिरूपणमावश्यकम्। मुद्रायाः क्रियाशक्तिरूपत्वम्, मन्त्रस्य तु ज्ञानशक्तिरूपत्वमुक्तं तत्र तत्र। तथा च—

मन्त्रो वै ज्ञानशक्तिश्च मुद्रा चैव क्रियात्मिका[६]। इत्यादि।

---

१. प्राणतोषिणी, पृ० ४१८-४१९;    २. तत्रैव।
३. निरुक्ते—१।५।२;    ४. योगिनीहृदये—२।१४-१६।
५. रु० या० ५२।२,४-५;    ६. स्वच्छन्दतन्त्रे—४।३७५।

नेत्रतन्त्रेऽपि आत्मस्वरूपाभिव्यक्तेः साधनत्रयं मन्त्रध्यानमुद्रात्मकमुपदिष्टमस्ति। मुद्रा नाम काश्चन शक्तयः। उक्तं च—

मोचयन्ति ग्रहादिभ्यः पाशौघं द्रावयन्ति च।
मोचनं द्रावणं यस्मान्मुद्रास्ताः शक्तयो मताः[१] ॥

"संविदेव क्रियाशक्तिरूपेण विश्वस्य मोदनं द्रावणं च कुर्वंती मुद्राख्यां लभते" इत्युक्तं योगिनीहृदये[२]। मुद्राणां परस्वरूपप्रतिबिम्बता श्रीदेवीयामलप्रामाण्येन प्रतिपादिता,[३] अथ च—

मुदं स्वरूपलाभाख्यं देहद्वारेण चात्मनाम्।
रात्यर्पयति यत्तेन मुद्रा शास्त्रेषु वर्णिता[४] ॥

इत्येवं मुदं राति (ददाति) या सा मुद्रा, "आतोऽनुपसर्गे कः" इति पाणिनिसूत्रेण[५] कर्तरि कप्रत्यये टापि च मुद्राशब्दस्य निर्वचनं द्रष्टव्यम्। पुनश्च तन्त्रालोके सशक्तिकानामेतासां मुद्राणामान्तरं स्वरूपं निरूपितम्[६]। वाह्याभ्यन्तरभेदेन द्विविधा मुद्रा भवन्ति, तत्र बाह्याः कररचनारूपाः, आन्तरा तु बन्धरूपा। स्वच्छन्दतन्त्रे सर्वासां मुद्राणां त्रैविध्यमुक्तम्[७]। तथा च—

मनोजा गुरुवक्त्रस्था वाग्भवा मन्त्रसम्भवा।
देहोद्भवाङ्गविक्षेपैर्मुद्रेयं त्रिविधा स्मृता ॥

इत्याम्नायप्रामाण्योद्धरणेन स्पष्टीकृतमस्ति।

तन्त्रालोके चतुर्विधा मुद्रा प्रतिपादिता। व्याख्यातं च तत्र श्रीजयरथेन—

अङ्गुलिन्यासभेदेन करजा बहुमार्गगा।
सर्वावस्थास्वेकरूपा वृत्तिर्मुद्रा च कायिकी ॥
मन्त्रतन्मयता मुद्रा विलापाख्या प्रकीर्तिता।
ध्येयतन्मयता मुद्रा मानसी परिकीर्तिता[८] ॥ इति।

एवं च करजा-कायिकी-विलापा-मानसी इति चतस्रो मुद्राः कथिताः। अत्राङ्गुलिसन्निवेशविशेषरूपा मुद्राः प्रायेण सर्वेष्वेव तन्त्रग्रन्थेषु प्रतिपादिताः सन्ति। बन्धरूपाः संस्थानविशेषानुसरणरूपा वा मुद्रा बन्धपदेन मुद्रापदेनापि वा हठयोगग्रन्थेषु प्रतिपादिताः सन्ति[९]।

करङ्किणी-क्रोधना-भैरवी-लेलिहानिकानामिका मुद्राः खेचर्या एव प्रपञ्च इत्युक्तं तन्त्रालोके[१०]। एता मुद्रा विज्ञानभैरवे क्रमदर्शनग्रन्थेषु च चिद्गगनचन्द्रिका-

१. ने० त० तृतीयपटले, पृ० १७४; २. यो० हृ० १।५७; ३. तन्त्रालोके—३२।१-२।
४. तत्रैव—३२।३१; ५. पा० सू० ३।२।३; ६. तन्त्रालोके—१।५८-७१।
७. स्वच्छन्दतन्त्रे—२।१०२; ८. तन्त्रालोके—३२।९।
९. हठयोगप्रदीपिका, तृतीयोपदेशे; १०. तन्त्रालोके मुद्राह्निके—३२।५-६।

महार्थमञ्जर्य्यादिषु विस्तरेण प्रकाशिताः सन्ति। यत्र करङ्किणी मुद्रा ज्ञानसिद्धानाम्, क्रोधिनी मुद्रा मन्त्रसिद्धानाम्, भैरवी मुद्रा मेलापसिद्धानाम्, लेलिहाना शाक्तसिद्धानाम्, खेचरी शाम्भवसिद्धानाम्, इत्यादिप्रकारेण वर्णनं द्रष्टव्यम्।

पाञ्चरात्रप्रभृतिषु वैष्णवागमेषु शङ्खचक्रादिभिः शरीरतापनं मुद्रापदेनोच्यते। ताश्च शरीरे आरोप्यन्ते, तथैव पाशुपतागमेषु मुद्रापदेन कीर्त्यमानानि द्रव्याणि शरीरे धार्यन्ते। यद्यपि एताभिरङ्गुलिसन्निवेशविशेषाणां संस्थानविशेषानुसरणरूपाणां वा मुद्राणां भेदः स्पष्ट एव, तथापि सर्वासामेतासां देहोद्भवविभागेऽन्तर्भावः कर्तुं शक्यते। कुलसन्ततिपरिचयाय मुद्रादीनामुपयोगः प्रकीर्तितः। तत्र पाञ्चरात्रपाशुपतागमेषु एतदर्थं बाह्यमुद्राणामुपदेशः रहस्यप्रधानेषु च तन्त्रेषु मुद्रास्वपि रहस्यमाहितम्। स्वसन्ततिपरिचयमात्रं मुद्राणां फलमिति न; अपि तु स्वाभिन्नसंविदभिव्यक्तिरपि प्रयोजनम्, बाह्याभ्यन्तरपूजासु तासामुपयोगेनेत्यादिकं वर्णनं द्रष्टव्यं तन्त्रालोके रहस्याह्निके[1]।

नेत्रतन्त्रे स्वात्मस्वरूपाभिव्यक्तेस्त्रिविधं साधनं मन्त्र-ध्यान-मुद्रारूपमुक्तम्। अद्वैतप्रमुखेषु तन्त्रेषु सर्वं स्वात्मरूपमेव। अतश्चात्र मुद्राया अपि परसंवित्तिरूपतैव मन्तव्या[2]। अर्थरत्नावल्यां तु नवमुद्राणां बीजानि निरूपितानि[3]। अत्र चान्तिमा योनिमुद्रापि प्रथमात्वेन प्रतिपादिता, योन्युद्भूतत्वात् सर्वासां मुद्राणाम्। तथा चाभियुक्तोक्तिः—

एका चैव महामुद्रा योनिमुद्रात्वमागता।
तथा विभक्तः स्वात्मा तु संक्षोभादिप्रभेदतः[4]॥

बाह्यपूजायां सर्वसंक्षोभिणीमुद्रायाः प्राथम्यमभिमतं परमेश्वरेण। अन्तःपूजने श्रीयोनिमुद्रायाः प्राथम्यमिति विद्यानन्देनोक्तं तत्रैव[5]। उत्तरषट्कवचने योनिमुद्राबन्धो निर्दिष्टः। तथा च—

'गुदमेढ्रान्तरे योनिस्तामाकुञ्च्य प्रबन्धयेत्'[6]। इति।

योनिमुद्राबन्धो मन्त्रगतसकलदोषनिराससामर्थ्यमादधातीति तन्त्रेषूपवर्ण्यते। उक्तं चोत्तरषट्के—

यद्यदुच्चरते मन्त्रो मन्त्रवर्णं शुभाशुभम्।
तत्तत् सिध्यति देवेशि योनिमुद्रानिबन्धनात्॥

योनिमुद्रावत् खेचरीमुद्राया अपि कश्चनातिशयो विद्यते। तत्साधनेन योगी खेचरतां प्राप्नोति। एतस्या लक्षणभेदादिविचारस्तन्त्रग्रन्थेषु विस्तरेण प्रतिपादितोऽस्ति। एवं नानाविधेष्वर्थेषु मुद्राशब्दस्य प्रयोगः साम्प्रतं प्राधान्येनाङ्गुलिविरचनात्मनि विधौ

---

१. तन्त्रालोके, आ० २९, पृ० २९-३०;  २. ने० त० २१।८०।
३. अ० र०, पृ० १८८-८९;  ४. तत्रैव।
५. तत्रैव।  ६. ऋजु०, पृ० १४७।

रूढ इव उपलभ्यते। एष एव प्रकारो नित्याषोडशिकार्णवे प्रतिपादितः। अधुना सन्ध्योपासनादिषु चतुर्विंशतिभेदेन मुद्राप्रकारः प्रदर्श्यंते, स तु तान्त्रिकसंस्कृतेरेव प्रभावो दृश्यते।

इदानीं यावद् ज्ञानशक्तिस्वरूपाणां मन्त्राणां राहित्येन क्रियाशक्तिस्वरूपा मुद्रा अपि निरूपिताः। अथ शैवागमीयं पत्यादिपदार्थत्रयं प्रस्तूयते।

पतिपदार्थविमर्शः

"शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम्" इत्यादि ज्ञानधर्मोत्तरवचनं पौनःपुन्येन संस्मरता सप्रयोजने शैवागमे पतिः पशुः पाश इति पदार्थत्रयमुद्दिश्यागमानुगुणं तावत् किञ्चिद् विचार्यते।

मृगेन्द्रागमवचनमनुसरता श्रीभोजदेवेन यदुक्तम्, तत् पदार्थत्रयमेवानुमोदितम्। तत्र पतिः शिव उक्तः, पशवो ह्याणव उक्ताः, पाशोऽर्थपञ्चकं प्रोक्तम्। तत्र विश्वसारोत्तरसूत्रे—

अचेतनस्य मायादेः प्रवर्तकतया पतिः।
सिद्धः सर्वार्थकृत् कर्ता व्यापकः सततोदितः॥

इत्येवं पत्युः शिवस्य स्वरूपं स्फुटं निरूपितमस्ति। सृष्टिरूपकार्यस्य कर्तृत्वमपि पत्युरेव, न तु पशोः, नापि पाशस्य इत्यपि निरूपितं वायवीयवचने। पौष्करवचनेन समस्तस्य प्रपञ्चस्याचेतनस्य चेतनप्रेरणयैव तत्र तत्र प्रवृत्तिर्निवृत्तिश्च भवत इति ज्ञायते। किरणसूत्रानुसारेण तस्य सर्वज्ञत्वमनादित्वं मलरहितत्वं शिवत्वं च प्रत्याय्यते।

स शिवाभिधः पतिर्ज्ञानशक्त्या सर्वं विजानाति, अथ च क्रियाशक्त्या जगद् रचयति, इति रत्नत्रये द्रष्टव्यम्।

शिवस्य कर्तृत्वविमर्शः

शिवस्य जगत्कर्तृत्वे निर्णीते एष संशय उदेति यत् शरीरं धृत्वा प्रपञ्चं निर्मीति भगवान् शिवः, अथवा शरीरमधृत्वैव? अत्रोच्यते—यद्यपि 'शाक्तं शरीरं भगवतः साकारता च' सर्वदर्शनसंग्रहे शैवमतप्रतिपादनावसरे समर्थिता, "शुद्धयोनिमयं तस्य वपुरुक्तमकल्मषम्" इति किरणायामपि उक्तम्, तथापि पत्युः शरीरपक्षे तस्य शुद्धस्य भौतिकशरीरसम्बन्धो नोचितः प्रतिभाति; किन्तु बैन्दवमेव शरीरं मन्तव्यम्। बिन्दुस्तस्योपादानतयाऽवगन्तव्यः। तच्च नात्र सम्भवति। तथा हि—बिन्दौ क्षोभे सत्येवोपादानता वक्तव्या, स च क्षोभः स्वतो वा शिवतो वा? तत्र प्रथमः पक्षो न सम्भवति, आत्माश्रयदोषप्रसङ्गात्। नापि द्वितीयः, तत्क्षोभक्रियायां शिवस्यास्ति शरीरम्, तस्य शरीरस्य साधकबिन्दुमोक्षार्थं पुनः शरीरान्तरकल्पनायामनवस्थाप्रसक्तेः। यदि तत्राचलमूर्तिमात्रकृत एव क्षोभः, तर्हि सृष्टिक्रियासु तस्य शरीरकल्पना वृथैव। तस्माच्छिवस्य कारणत्रितयराहित्येन कृतशरीराभावेऽपि स्वशरीरस्पन्दादौ आत्मनः कर्तृत्ववत् सृष्ट्यादिक्रियासु कर्तृत्वं सुतरामुपपद्यते। पौष्कर एतदेव समर्थितमस्ति—

"अदेहस्यापि कर्तृत्वं स्वदेहप्रेरणे यथा" इति।

### पत्युः कर्तृत्वं सकरणकम्

प्रपञ्चस्योत्पत्तिरूपा क्रिया किञ्चित् करणमपेक्षते, क्रियात्वात्, छिदादिक्रियावत्। अतस्तदपेक्षायाम्—

यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः।
एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया॥

इति किरणवचनानुसारं तस्य कर्तृत्वे इच्छाशक्तिरेव करणमिति निश्चेतुं शक्यते। न चेन्द्रियादिकरणाभावे तस्य कर्तृत्वं न सिध्यतीति वाच्यम्, अक्षरहितस्याप्ययस्कान्तमणेर्यथा लोहाकर्षणे कर्तृत्वं दृश्यते, तद्वदत्रापि ज्ञायताम्। मृगेन्द्रागमे विद्यापादे स्पष्टमेतत्प्रतिपादितमस्ति।

### भगवतः शिवस्य पञ्चमन्त्रतनुत्वं पञ्चक्रियाकारित्वं च

भगवतः शिवस्य पञ्चमन्त्रतनुत्वं प्रतिपादितमस्ति—

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।
ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्॥ इत्यादिना।

पुनश्च— जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः।
कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि॥

इत्यनेन जगदुत्पत्तिस्थितिप्रभृति पञ्चकृत्यकर्तृत्वमपि भगवति शिवे निरूपितमस्ति।

### भगवतः शिवस्य प्रपञ्चकारणताविचारः

शैवागमे भगवतः शिवस्य प्रपञ्चं प्रति निमित्तकारणत्वमेव स्वीक्रियते, इति पराख्यसूत्रेण ज्ञायते। यथा घटादिकार्ये कुलालस्य निमित्तकारणता, दण्ड-चक्रादीनां सहकारिकारणता, मृदादीनामुपादानत्वम्. तद्वदत्रापि पृथग्भूतेन कारणत्रयेण भवितव्यम्। अत्रोच्यते—भगवान् शिवो निमित्तकारणम्, शक्तयः सहकारिकारणम्, बिन्दुरुपादानकारणमिति स्पष्टीकृतमस्ति पौष्करे पराख्यसूत्रे च।

एतावता लूतातन्तुन्यायेन वेदान्ताभिमतमभिन्ननिमित्तोपादानत्वं निराकृतं वेदितव्यम्; तत्रापि मुखनिःसृताया लालाया एवोपादानत्वम्, चेतनतत्त्वस्य तु निमित्तत्वमिति पृथगेव व्यवस्था। ननु मायाकर्मादीनामेव प्रपञ्चस्य निमित्तत्वमस्तु, न तु शिवस्येति चेत्, उच्यते, चेतनप्रेरणां विनाऽचेतनानां कार्यकरणानुपपत्त्या तत्प्रेरकचेतनस्यावश्यकत्वे सति अस्मदादीनां जीवानां सर्वज्ञत्वाभावेन तत्प्रेरकत्वासम्भवे सर्वज्ञस्य सर्वकर्तुः शिवस्यैव तत्सम्भवेन समस्तप्रपञ्चे तस्यैव निमित्तकारणत्वौचित्याद् मायादीनां तन्निरासो बोध्यः।

### पत्युस्त्रैविध्यम्

शक्तोद्यत-प्रवृत्तभेदेन पतिः शिवस्त्रिविध उच्यते। तथा च—

शक्तोद्युक्तप्रवृत्तश्च कर्ता त्रिविध उच्यते।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः॥

अत्र यच्छक्तत्वं कार्यं प्रति योग्यत्वम् ।
असौ निष्कलावस्था तद्वान् शान्त इति कथ्यते ॥

यच्चोद्युक्तत्वं सकलनिष्कलावस्था, तद्वान् सदाशिव इति प्रोच्यते । प्रवृत्तक्रियत्वं च स्थूलतया तावद् ईश्वर एव । यथा ह्यात्मा शरीरसम्बन्धात् सकलः, प्रलयावस्थायां निष्कलः, मुक्त्यवस्थायां चेत्पर इति ज्ञायते । एवमेव शिवोऽपि सकल-निष्कलादिशब्दैर्भिन्न इत्युद्गीर्यते[१] ।

**पशुः (जीवः)—**

पराख्यसंहितायां पशुस्वरूपं वर्णितमस्ति । तथा हि—

देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः ।
स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः ॥

अत्र 'देहान्यः' इत्यनेन चार्वाकमतनिरासः । 'अनश्वरः' इत्यनेन क्षणभङ्गवादनिरासः । 'व्यापी' इत्यनेन जैनपक्षनिरासः । 'विभिन्नः' इत्यनेन एकजीववादनिरासः । मलशब्दो ज्ञानावरकं कर्मभिन्नमज्ञानं बोधयति, तद्वान् जीवः समलः, अजड इति ज्ञानक्रियास्वभावः, स्वकर्मफलभुगिति स्वकर्मधर्माधर्मात्मकं तस्य फलं भुङ्क्त इति । किञ्चिदल्पं जानातीति किञ्चिज्ज्ञः, 'सेश्वरः' इत्यनेन जीवे ईश्वरस्य प्रेरकत्वं लभ्यते । एतावता सांख्यमतस्यापि निरासः ।

मृगेन्द्रतन्त्रे जीवस्याणुत्वं दृक्क्रियारूपचैतन्यस्वरूपत्वं प्रोक्तमस्ति[२] । मलावृतं चैतन्यं न प्रकाशते । अतश्च 'अणवश्चिद्रूपाः' इति 'शिवात्मकाः प्रमातारः' इति च नरेश्वरविवेके द्रष्टव्यम् । जीवस्य पाश्यत्वम् (पाशान्वितत्वम्) इति निरूपितं तन्त्रसद्भावे । जीवस्त्रिपुरान्तकः शिव इति च हंसभेदे निरूपितमस्ति ।

**पशोस्त्रैविध्यविमर्शः**

विज्ञानाकल-प्रलयाकल-सकलभेदेन पशुस्त्रिविधः कीर्त्यते[३] । तत्र भोगादिना कर्मक्षये सति कलादिभोगसम्बन्धाभावात् केवलमलमात्रयुक्तो विज्ञानाकल इत्युच्यते । प्रलयेन कलादेरुपसंहाराद् मलकर्मयुक्तः प्रलयाकलः । मलमायाकर्मात्मकबन्धत्रययुक्तः सकल इत्युच्यते ।

तत्र प्रथमस्य द्वैविध्यम्—समाप्तकलुषासमाप्तकलुषभेदात् । एवमेव द्वितीयोऽपि द्विविधः । पक्वपाशद्वयस्तद्विलक्षणश्च । तृतीयोऽपि द्विप्रकारः—पक्वकलुषापक्वकलुषभेदात् । तत्र परमेश्वर एषां कर्मानुगुणां कीदृशीं गतिं विदधाति, एतत् सर्वं तत्र तत्रागमग्रन्थेषु निरूपितमस्ति ।

---

१. पौष्करे विद्यापादे मतङ्गे; तन्त्रालोके—८।३७९ ।
२. मृगेन्द्रे विद्यापादे—२।५-६; ३. तत्त्वप्रकाशे—८।१६ ।

## पशोरवस्थात्रयम्

स्वायम्भुवागमे—

अथात्माऽविमलो बद्धः पुनर्मुक्तश्च दीक्षया ।
विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः ॥

इत्येवं पशोः तिस्रोऽवस्था निरूपिताः सन्ति । अत्रात्मशब्दो जीवपरः, स चात्मा केवलः, सकलः, अमल इति चावस्थात्रितययुक्तो वर्तते । तत्र प्रथमो विमलो न भवति इत्यविमलः, अत्यन्तमलिनः, केवलावस्थ इत्यर्थः । बद्धः कर्मानुरक्तः कलादिबन्धनेन बद्धः सकलावस्थः, पुनश्च दीक्षया कलादिबन्धनाद् मुक्तः अमलावस्थः शुद्ध इत्युच्यते ।

केवलावस्थः—

अमूर्तः स पशुर्नित्यो निर्गुणो निष्क्रियोऽप्रभुः ।
मायोदरगतो व्यापी भोगोपायेष्वशक्तितः ॥
स केवलस्त्विति प्रोक्तः स्वापवान् मलबन्धनात् ।

इति सुप्रभेदागमानुसारेण केवलावस्थो जीवो व्यापकः सन्नपि मायोदरे स्थितो भोगोपायेषु अशक्तः प्रोच्यते, स च भोगैकरसिकः कर्मवशगो भुवनजदेहेषु सर्वेषु पर्यटति[1] ।

जीवः कलारहित इति चेतनोऽप्यचेतन इव भाति । तदुक्तं सर्वज्ञानोत्तरे—

कलानां निलयो यस्मात्तेनासौ केवलः स्मृतः । इति ।

सकलावस्थः—

संसारी विषयो भोक्ता क्षेत्री क्षेत्रज्ञ एव च ।
शरीरी चेति बन्धात्मा सकलः प्रोच्यते बुधैः ॥

इत्येवं सकलावस्थस्य लक्षणं वर्णितमस्ति । सकलावस्थो जीवो बद्धोऽहमिति ज्ञात्वा बन्धविमुक्तये प्रयतते, इति केवलापेक्षयाऽस्य वैशिष्ट्यम् ।

अमलावस्थः—

बन्धविमोकाय प्रयतमानं जीवं परमेशः शिवोऽनुगृह्णाति[2] । सोऽयमनुग्रहलक्षणो व्यापारशक्तिपात इत्युच्यते शास्त्रेषु । शक्तिपातपूतो जीवः शिवसायुज्यं प्राप्नोति । सोऽयममलावस्थो जीवो मुक्त इत्युच्यते । जीवन्मुक्तस्य लक्षणमपि—

अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा ।
तदा भवति शान्तात्मा सर्वतो विगतस्पृहः ॥ इति ।

## पाशभेदविमर्शः

तत्त्वप्रकाशकृता क्वचित् पाशानां पञ्चविधत्वम्,[3] एकत्र चतुर्विधत्वं[4] प्रोक्तमस्ति । शतरत्नसंग्रहादिषु च पाशानां पाञ्चविध्यं वर्णितमस्ति । मृगेन्द्रागमा-

---

१. तत्त्वसंग्रहे—श्लो० २५; २. मृगेन्द्रागमे—वि० पा० ५।१ ।
३. तत्त्वप्रकाशे—श्लो० ५; ४. तत्रैव—श्लो० १६ ।

नुसारेण पाशाश्चत्वार एव वर्णिताः सन्ति; परन्तु अधिकं प्रविष्टं न तु तद्धानिकरमिति न्यायेन पाशपञ्चकस्य चर्चा विधीयते। तेषां नामानि—मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति।

### मलाभिधानः पाशः

मलिनीकरोति दृक्क्रियात्मकं तेज आच्छादयति, इति मलः। अयमनादिकालात् प्रवृत्तो मल एव पुरुषाणां पशुत्वमापादयति। यथा ताम्रस्य कालिमा रसशक्त्या निवृत्तो भवति, तथाऽनादिकालात् सम्प्राप्तो मलः शिवशक्त्या निवर्तते।

मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तथा।
पतिः पशुरविद्येति मलपर्यायवाचकाः॥

इत्येवं तस्य प्रभेदाः सुप्रभेदे निरूपिताः सन्ति। मलस्य कर्मवद् नानादिप्रवाहत्वमपि तु कारणाभावादेवानादित्वं मायावदिति बोध्यम्।

यद्यपि मल एक एव, तथापि तस्य शक्तयो विभिन्ना इति नैकमुक्तौ सर्वेषां मुक्तिप्रसङ्गः[1]। पुनश्च तत्रैव—

एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसाम्।
तुषतण्डुलवज्ज्ञेयस्ताम्राश्रितकालिमवद् वा[2]॥

मलश्चिच्छादक इति किरणागमेऽपि प्रोक्तम्। ननु मलस्य सत्त्वे किं प्रमाणमिति चेत्, उच्यते, मोहादिरूपकार्येण लिङ्गेन शेषवदनुमानं मन्तव्यम्। मोहादीनि मलकार्याणि सप्तविधानि सन्ति। तद्यथा—

मोहो मलश्च रागश्च विषादः शोष एव च।
वैचित्त्यं चैव हर्षाख्यः सप्तैते सहजा मलाः[3]॥

मलस्य द्वैविध्यमुक्तम्—

बौद्धं च पौरुषेयं च द्विविधं तन्मलं स्मृतम्।
तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम्[4]॥
बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनाद् ध्रुवम्।
तदेव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने[5]॥

एवं स्थितौ दीक्षादिना पौरुषेयस्य मलस्य क्षयो भवति। समस्तविकल्पोन्मूलनेन बौद्धो मलः क्षयं याति, इति सिद्धम्।

मलोऽज्ञानमविद्या इत्यादयः शब्दा यद्यपि पर्यायतया सन्ति प्रयुक्ताः, तथापि तत्तद्दार्शनिकनिकायेषु वर्तते तेषां विशिष्टं वैलक्षण्यम्। शैवागमेषु प्रयुक्तो मलशब्द आणवं मलं लक्षयति। अयं च प्रथमः पाशः।

---

१. तत्त्वत्रयनिर्णये—श्लो० ११; २. तत्रैव—श्लो० १८।
३. मतङ्गपारमेश्वरे—वि० ६।१०३; ४. तन्त्रसारे—पृ० २-५; ५. तन्त्रालोके—१।५०।

## तिरोधानशक्तिनामा द्वितीयः पाशः

मलस्य शक्तयः परमेशशक्त्यधीना एव प्रसरन्ति, न तु स्वातन्त्र्येण। मृगेन्द्रतन्त्रे विद्यापादे सूत्रद्वयेनास्याः शक्तेर्वर्णनं कृतमस्ति। माहेश्वरी शक्तिस्तासां सर्वासां मलशक्तीनां धर्मानुवर्तनाद् दृक्क्रियात्मकसंविरोधकत्वरूपस्य धर्मस्यानुगमनेनैव पाशत्वेन व्यपदिश्यते, न तु तस्या मुख्यं पाशत्वम्[1]।

यतश्च सा सर्वानुग्रहकारिका समस्तजगदनुग्रहस्वभावा शिवा। इयमेव पतिशक्तिर्यावन्मलपरिपाकमचिद्रूपाणि मल-कर्म-माया-तत्कार्याण्यनुगृह्णाति, पाशं च तिरोदधातीति कृत्वा सर्वेषामनुग्रहकारित्वात् सर्वानुग्राहिकेति सिद्धम्। तथा चोच्यते—

शिवस्य शक्तिः सर्वेषां सर्वानुग्रहकारिणी।
पाशधर्मनिरोधेन पाशानां पाशहेतुना॥
निवृत्तियोग्यतां तेषां करोतीति यतस्ततः।
पाशधर्मनिरोधाच्च विधत्ते पश्वनुग्रहम्॥

एवं तत्त्वप्रकाशेऽपि पाशानुग्राहित्वमुक्तमस्ति[2]।

## महामायाख्यस्तृतीयः पाशः

उपादानमन्तरेण कदाचिदपि कस्यापि कार्यस्य सिद्धिर्न भवतीति शुद्धस्याध्वनो मूलभूतमुपादानकारणं महाविद्या 'वागीश्वरी' इति विश्वसारोत्तरसूत्रमनुसृत्य प्रोच्यते। पौष्करवचनानुसारेण वागीश्वर्याः परात्वं विद्यात्वं च, मायाया स्वपरात्वमविद्यात्वं चोक्तमस्ति।

नादकारिकाऽनुसारेण महामायाया नादादीनि बहूनि पर्यायपदानि सन्ति[3]। इत्थं च महामायायाः शुद्धाध्वन उपादानकारणत्वमुक्तम्। मायाया मोहकतया प्रवृद्धपुरुषकार्यकरणरूपशुद्धाध्वकरणत्वासम्भवेन पारिशेष्याद् महामाया सिध्यति।

महामाया शुद्धविद्या वागीश्वरी मातृका चेति नामानि तन्त्रालोके व्यवहृतानि[4]। शुद्धविद्यैव महामायापदाभिधेया इत्यपि उक्तं श्रीमताऽभिनवगुप्तेन[5]। रत्नत्रये तस्या बिन्दुनादादिशब्दैः सङ्केतः प्राप्यते। परा-पश्यन्ती-मध्यमा-वैखरी चेति चतस्रो वृत्तयस्तस्या निरूपिताः सन्ति[6]।

## कुण्डलिनी महामाया

शतरत्नसंग्रहे महामाया शक्तिः समवायिशक्तेरधो वर्तमाना मायाकर्मानुसारिणी कुण्डलिनी शक्तिः शिवस्य भगवतः परिग्रहशक्तिरित्युच्यते[7]। सेयं कुण्डलिनी सर्पाकृत्या

१. मृगेन्द्रागमे—वि० पा० ७।११-१२;    २ तत्त्वप्रकाशे—श्लो० २०।
३. नादकारिका—श्लो० १-१०;    ४. तन्त्रालोके—८।३३७-३८।
५. ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्—३।१।६।
६. शतरत्नसंग्रहे—पृ० ४१-४४, रत्नत्रये च—श्लो० ७०-७१।
७. शतरत्नसंग्रहे—पृ० ४१-४४।

नादरूपेण स्वकार्येण प्रतिपुरुषं भेदेनावस्थिता, न तु स्वरूपेणेति सर्वज्ञानोत्तरवृत्तौ स्पष्टम् ।

इदमत्र ज्ञेयम्—समवायिशक्त्या क्षुब्धाया महामायायाः कुण्डलिन्याः सकाशान्नादतत्त्वं प्रथममुत्पन्नं भवति । इदमेव शिवाश्रयत्वेन शिवतत्त्वमप्युच्यते । ततो बिन्दुसंज्ञकं तत्त्वमुत्पन्नं भवति । इदं च तत्त्वं शब्दाधारतया शक्तितत्त्वम्, ततो नादाख्यं तत्त्वम्, ततश्चेश्वरतत्त्वम्, ततश्च विद्याख्यं तत्त्वम्, इत्येवं क्रमेण शुद्धानि पञ्चतत्त्वानि जायन्ते ।

केषाञ्चनाचार्याणां मते इदं नादतत्त्वमेव महामायेतिपदेनोद्गीयते । तेषां मते चत्वार्येव शुद्धानि तत्त्वानि सन्ति । तथा हि—बिन्द्वाख्यं शिवतत्त्वमेव प्रधानमुपादानम् । अन्यानि चत्वारि तस्य कार्याणि । पौष्करवचनानुसारेण तु नादाख्यं शिवतत्त्वमपि कार्यमेव; किन्तु तत्र चत्वार्येव कार्याणि शक्तितत्त्वान्तर्भावेण शुद्धानि संकीर्तितानि । सर्वज्ञानोत्तरे तु शक्त्यभिधानं बिन्दुतत्त्वमेव परमं कारणमित्युक्तमस्ति ।

**महामायाया वाग्रूपाश्चतस्रो वृत्तयः**

महामायाया वैखर्यादयो वाग्रूपाश्चतस्रो वृत्तयः कार्यभूता आगमग्रन्थेषु बहुत्र निरूपिताः सन्ति । विश्वसारोत्तरसूत्रे—

तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः ।
वैखरी मध्यमा चान्या पश्यन्ती सूक्ष्मसंज्ञिता ॥

इत्येवं चतस्रो वृत्तयः प्रोक्ताः सन्ति । आसु चतुर्थी वृत्तिः नादरूपा, पश्यन्तीरूपा तृतीया वृत्तिर्बिन्दुः, द्वितीया वृत्तिर्मध्यमा अक्षरम्, प्रथमा वैखरी वृत्तिर्मातृका इति प्रोच्यते । अनेन शब्दसृष्टिरपि बिन्दूपादानिकेत्युक्तं भवति ।

अयमत्र सृष्टिक्रमः—प्रथमं शिवेच्छया महामायायां क्षोभो भवति, ततो नादोत्पत्तिः, नादाद् बिन्दुः, बिन्दोरक्षरम्, अक्षरान्मातृका चेति । तथा हि—

नादः सूक्ष्मो भवेद् बिन्दुः पश्यन्ती मध्यमाक्षरम् ।
मातृका वैखरी ज्ञेया नादाद्यास्तु शिवादयाः ॥

इत्युक्तं सिद्धान्तरहस्यसारे । आसां वृत्तीनामाश्रयभूतानि वृत्त्यादयः पञ्च कला बिन्दोरेव कार्याणि । एषा च महामाया शब्दवस्तूभयात्मिकाऽस्ति, शब्दात्मकानां वर्णपदमन्त्राणां कलातत्त्वभुवनानां वस्तुरूपाणां चोत्पत्तिकारणात् । महामायाया वाग्रूपत्वस्य महिमा तत्र तत्र ग्रन्थेषु प्राचुर्येण वर्णितोऽस्ति । तथा हि—

संविन्मूलाद् वर्णरूपाज्ज्ञानस्तस्मात् सरस्वती ।
प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते[1] ॥
घोषिणी जातिनिर्घोषा नित्यमेव प्रवर्तते ।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥
सततं स्पन्दते ह्येषा शाश्वतं ब्रह्मवादिनी[2] ॥

आभ्यां संवित्प्रकाश-महाभारतवचनाभ्यां तन्महत्त्वं द्रष्टव्यम् ।

१. संवित्प्रकाशे—पृ० ८७; २. महाभारते, आश्व० प० २१-२२ ।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1] ॥

इति वाक्यपदीयपद्यमपि वाक्तत्त्वस्य ब्रह्मात्मकतां प्रतिपादयत् तदीयमहत्त्वप्रख्यापनेऽग्रतः पादं विदधाति। अत्र वाक्तत्त्वस्योत्पत्तिविनाशरहितत्वं व्यापकत्वं सच्चिदानन्दात्मकब्रह्मरूपत्वम्, जगतो मूलभूतस्य वेदस्य प्राथमिकविवर्त्युपादानत्वम्, तदनु आकाशादिप्रपञ्चजातस्य च विवर्त्युपादानत्वं साधु प्रतिपादितमस्ति।

पद्येऽस्मिन्नुत्तरार्द्धे 'विवर्ततेऽर्थभावेन', 'प्रक्रिया जगतो यतः' इत्यनयोरंशयोरर्थतः पौनरुक्त्यमायाति, तत्परिहाराय जगत्पदस्य जगतो मूलभूते वेदे लक्षणा कर्तव्या भवति, प्रक्रियापदे प्रपदेन प्राथम्यस्य बोधः, क्रियापदेन च विवर्तस्य बोधः। अतो जगतो मूलभूतस्य वेदस्य प्रथमो विवर्तः, शब्दब्रह्मणः सकाशात् समपद्यत। उक्तञ्च—

"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"।

अत्र ब्रह्मण उत्पत्तिर्वर्णिता भगवतः सकाशात्। वेदानां सृष्टिकर्त्रे ब्रह्मणे प्रेषणं चोक्तम्। एतावता वेदानामपौरुषेयत्वं सूचितम्। द्रष्टव्यं विस्तरेण चैतद् व्याख्यानं वाक्यपदीयटीकायामस्मद्गुरुवरैः सम्पादितायामम्बाकर्त्र्याम्[2]।

### मायाख्यचतुर्थपाशविमर्शः

मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्।
विश्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम् ॥

इत्येवंलक्षणं मायारूपमुक्तं शतरत्नसंग्रहे स्वायम्भुवसूत्रे। प्रलये सर्वं जगद् यतो भवति[3], सा माया इति व्युत्पत्तिद्वयेन द्विविधो मायापदार्थो लक्ष्यते।

विनाशं न गच्छतीत्यविनाशि=अव्ययमिदं मायातत्त्वम्, सर्वविकाराणामुपादानम्। ननु जगदुत्पत्तौ परमाण्वादिवदुपादानकारणबाहुल्यमभ्युपगम्यताम्, बहुभ्यस्तन्तुभ्य एकस्य पटस्योत्पत्तिदर्शनात्। किं मायाख्यस्यैकस्य परमकारणस्य कल्पनया? इति चेत्, सत्यम्, अनेकतन्त्वात्मकं यत् कारणं पटस्योक्तम्, तदपि एकस्मादेव कार्पासद्रव्यादवगम्यताम्। एवं परमकारणादेकस्मादेव मायातत्त्वात् सर्ग-स्थिति-प्रलयहेतुभूतात् सर्गादौ जगदुत्पत्तिरितीश्वरवत् पुरुषार्थसाधकत्वादीश्वरत्वमपि मायातत्त्वस्य सुसम्पन्नम्।

जगत उत्पत्तिक्रमोऽत्रेदृशः—मायातत्त्वात् प्रथमतः कलानियतिनाम्नोस्तत्त्वयोरुत्पत्तिः। कलातत्त्वात्तु विद्यारागतत्त्वयोः प्रधानतत्त्वस्य चेति त्रयाणामुत्पत्तिः, श्रीकण्ठ-

---

१. वा० प० १।१; २. तत्रैव, टीकायाम्; ३. पौष्करवचनमेतत्।

क्षोभितात् प्रधानतत्त्वात् सत्त्वरजस्तमसामभिव्यक्तिः, तेभ्यश्च बुद्धितत्त्वस्य, बुद्धितत्त्वाच्च त्रिविधस्याहङ्कारस्य, तैजसादहङ्काराद् मनसो ज्ञानेन्द्रियाणां च, वैकारिकादहङ्कारात् कर्मेन्द्रियाणाम्, तामसादहङ्कारात् पञ्चतन्मात्राणाम्, ततश्चाकाशादिपञ्चभूताना-मुत्पत्तिः। एवं संक्षेपेण वर्णितो मायाख्यश्चतुर्थः पाशः।

**कर्माभिधपञ्चमपाशविमर्शः**

धर्माधर्मात्मकं कर्म तच्च त्रिविधमर्थतः।
जात्यायुर्भोगदं येन नामिश्रं पच्यते क्वचित्॥

इति विश्वसारोत्तरसूत्रोक्तं कर्मलक्षणं विमृश्यते। धर्माधर्मात्मकं कर्म जातिप्रद-मायुःप्रदं भोगप्रदं चेति त्रिविधं भवति। योगसूत्रेऽपि—'सति मूले तद्विपाको जात्यायु-र्भोगाः' इत्येवमुक्तमस्ति। अत्र जातिर्देवत्वादिः, आयुः शतवर्षेष्वपि जीवनादिः, भोगः सुखदुःखादेरनुभवः। सेवा कृष्यादिषु युगपत्प्रवृत्तयोः पुरुषयोरेकस्य फलसिद्धिरपरस्य नेत्यत्र धर्माधर्मात्मकं कर्मैव कारणं मन्तव्यम्[२]।

दृष्टमदृष्टं च द्विविधं कर्मेति मृगेन्द्रसूत्रेण ज्ञायते[३]। तत्रादृष्टं कर्म देहेन्द्रिय-भुवनादीनामुत्पादकं धारकमध्यात्मादि त्रितयसाधकं च भवति। तत्रेष्टदेवतानुध्यान-नमस्कार स्तोत्रपाठ-यजन-हवन-प्रभृतिकर्मधर्मात्मकम्। परधनहरणेच्छा-तत्प्रवाद-तद्धिसादिकं कर्म अधर्मात्मकम्। सिद्धान्तसारावल्यध्ययनेनैतज्ज्ञायते यत् सत्यानृतयोनि-त्वात् कर्म धर्माधर्मात्मकं भवति। एतच्च स्वापे परिपाकमाप्नोति, सृष्टिकाले उपयोग-मेति, संहारकाले च मायामाश्रित्य तिष्ठति।

स्वायम्भुवागमे तु 'कर्मतश्च शरीराणि विविधानि शरीरिणाम्' इत्युक्तमस्ति। पौष्करवचनमनुसृत्य निश्चीयते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति। किरणागमाध्ययनेन ज्ञायते यद् दीक्षाप्रायश्चित्तादिना तस्य क्षयो भवतीति। नित्य-नैमित्तिककाम्यकर्मणां वर्णनं प्रायः सर्वत्र शास्त्रेषूपलभ्यते। शान्तिक-पौष्टिकादीनि मारण-मोहनादीनि नानाविधानि षट्संख्याकानि कर्माणि, तेषां साधकाः प्रयोगाश्च प्रायो बाहुल्येन तन्त्रसार-नेत्रतन्त्र-तन्त्रालोकादिग्रन्थेषु प्राप्यन्ते। तथा च—

पूजा होमो बलिर्भिन्ना चरुश्चातिथिपूजनम्।
षट् कर्माणि तु कार्याणि शिवाचार्येण नो परैः॥

इत्येवं षट्कर्माणि निरूपितानि सन्ति।

महान्ति पुस्तकान्याहुर्यदाज्ञावशतः सुराः।
पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते[४]॥

इति वचनेन ज्ञायते यत् परमेश्वराज्ञावशीभूतेन जीवेन तत्समर्पणबुद्ध्या यत्कर्म

---

१. विश्वसारोत्तरसूत्रम्,; २. "उभयोः कृषिसाम्येऽपि कश्चिद् धान्यानि गच्छति" (पौष्करे)।
३. मृगेन्द्रसूत्रम्—८।३।४; ४. भट्टनायकस्तोत्रं द्रष्टव्यम्।

क्रियते, तदपि पावनमेव मन्तव्यम्। भोगादिना कर्मणां क्षये तन्निर्मुक्तो जीवः परमां शान्ति लभते। भर्जितं बीजं यथा न प्ररोहति, तथैव विकल्पमुक्तचित्तस्य कर्मापि न जननादिकारणं भवति। मोहमूलान्येव कर्माणि संसृतिकारणानि भवन्ति। एवं मलादयः पञ्च पाशा निरूपिताः।

एतावता प्रबन्धेन पति-पशु-पाशरूपत्रिविधपदार्थस्येषज्ज्ञानप्रकारः प्रदर्शितः। तत्र शिवस्य पत्युर्ज्ञानेनैव मुक्तिः सम्भवति। पशु-पाशज्ञानं तु परम्परया तत्रोपकारकम्। बहिरन्तश्च सर्वत्र ज्ञानमेव विषयात्मकज्ञेयात्मना प्रकाशते, ज्ञानं विना विषयस्य काऽपि सत्ता नास्ति।

यत्र सर्वं लयं यान्ति दृश्यन्ते तत्त्वसञ्चयाः।
तां चितिं पश्य कायस्थां कालानलसमत्विषम्॥

इति वीरावलीशास्त्रादिषु चर्चिता चितिरन्यत्रागमग्रन्थेषु संवित्पदेन वर्णिता। सैव संविद्रूपा पराशक्तिः परमेश्वरादभिन्नेति संविदभिन्ने परतत्त्वे भगवति शिवे भारमारोप्य तान्त्रिकाः परं सुखमासते।

## चतुष्षष्टितन्त्राणि

श्रीजयरथकृत-तन्त्रालोकविवेकधृतायां श्रीकण्ठ्यां संहितायाम्, नित्याषोडशिकार्णवे, कुलचूडामणौ, सर्वोल्लासतन्त्रे, महासिद्धसारतन्त्रपरिगणितेषु विष्णुक्रान्ता-रथक्रान्ता-अश्वक्रान्ताविभागेषु च चतुष्षष्टितन्त्रनामानि दृश्यन्ते। तत्र श्रीकण्ठ्यां संहितायामभेदप्रधानानां चतुष्षष्टिभैरवागमानां निर्देशः। नित्याषोडशिकार्णवोक्तः एतद्विषयकः प्रकारो भिन्नः। कुलचूडामणावपि अयमेव प्रकारो गृहीतः। सर्वोल्लासादितन्त्रेषु तृतीयः प्रकारो दर्शितोऽस्ति।

नित्याषोडशिकार्णवे भैरवाष्टकं बहुरूपाष्टकं यामलाष्टकं च निर्दिष्टम्। चतुष्षष्टितन्त्रपरिगणनेऽत्र वर्तते मतभेदः टीकाकाराणम्। चतुःषष्टिभैरवागमा अष्टाष्टकविभागेनाष्टभिर्भैरवैरुपदिष्टा इति तन्त्रालोकविवेकधृतश्रीकण्ठीयसंहितावचनेभ्यः सुस्पष्टं प्रतीयते।

तत्र स्वच्छन्दादीनि भैरवतन्त्राणि बहुरूपेण, मततन्त्राणि चण्डेन, मङ्गलातन्त्राणि क्रोधेशेन, चक्राष्टकम् असिताङ्गेन, अन्धकाद्यं बहुरूपाष्टकं रुरुणा, वागीशाष्टकं कपालीशेन, शिखाष्टकमुन्मतेन भैरवेण भाषितानि केषाञ्चिन्मते—

असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च।
कपाली भीषणश्चेति संहारश्चाष्टभैरवाः॥

इत्युक्तानामष्टभैरवाणामष्टौ तन्त्राणि कथितानि। अन्येषां मते तु सिद्धिभैरव-वटुकभैरव-कङ्कालभैरव-योगिनीभैरव-महाभैरव-शक्तिभैरव-मायिकभैरव-कङ्कालाग्निभैरवाष्टकप्रतिपादकं तन्त्राष्टकमिति। इदमुभयमपि संख्यासम्पत्तिविरोधाद् यामलादिशब्दवद् भैरव-

शब्दस्य तन्त्रेषु क्वापि प्रयोगादर्शनाच्च चिन्त्यम् । अतश्च षोडशनित्यानामेकतन्त्रवदष्ट-भैरवाणामेकमेव तन्त्रमिति मन्तव्यम्[1] ।

तत्र तत्र तन्त्रग्रन्थेषु चतुष्षष्टितन्त्राणां नामान्यपि निर्दिष्टानि सन्ति, तत एव तेषां ज्ञानं कार्यम् ।

## पीठस्वरूपविमर्शः

महासंविदुपलब्धिस्थानानि पीठानि डॉ० दिनेशचन्द्रसरकारनिबद्धे 'दी शाक्त पीठाज्' इत्यभिधाने निबन्धग्रन्थे विस्तरेण वर्णितानि सन्ति । नित्याषोडशिकार्णवे द्वादशश्लोक्या द्वादशे पद्ये चत्वारि पीठानि वर्णितानि । तन्त्रालोके[2] तद्विवेके च नैश-संचारशास्त्रप्रामाण्येन पीठोपपीठसन्दोहोपसन्दोहक्षेत्रोपक्षेत्राणि वर्णितानि । शास्त्रेषु सदा यथायोग्यं स्थानं पीठनाम्नाऽभिधीयते । तच्च बाह्याभ्यन्तरभेदेन बहिर्देहे च विराजते । तद्यथा—भगवतः शिवस्येच्छाशक्तिरेव पीठभावमयते । समस्तस्य जगत आधारभूतं तत् । अत एव तस्याः शक्तेर्नैमित्तिकमिदमभिधानं पीठमिति । शक्तिपीठाद् बिन्दुनादमयं पीठद्वयं जायते । बिन्दुपीठो वामभागे, दक्षिणे च नादपीठः । एवं पीठत्रयं निष्पद्यते । शक्तिपीठं कामरूपं प्रथमम्, दक्षिणे नादपीठं पूर्णगिरिः, उत्तरे च बिन्दु-पीठमुड्डीयानाख्यम् । एतत्पीठत्रयं मुख्यम् ।

तन्त्रालोके एकोनत्रिंशाह्निके पीठन्यासादिप्रसङ्गेऽपि पीठनामानि दृश्यन्ते । तद्यथा—

अट्टहासं शिखास्थाने चरित्रं च करन्ध्रके ।
श्रुत्योः कौलगिरिं नासारन्ध्रयोश्च जयन्तिकाम् ॥
भ्रुवोरुज्जयिनीवक्त्रे प्रयागं हृदये पुनः ।
वाराणसीं स्कन्धयुगे श्रीपीठं विरजं गले ॥
एडामोमुदरे हालां नाभौ कन्दे तु गोश्रुतिम् ।
उपस्थे मरुकोशं च नगरं पौण्ड्रवर्धनम् ॥
एलापुरं पुरस्तोरं सक्थ्यूर्वोर्दक्षिणादितः ।
कुड्याकेशीं च सोपारं मायाकुक्षीरके तथा ॥
जानुजङ्घे गुल्फयुग्मे त्वाम्नातनृपसद्मनि ।
पादाधारे तु वैरिञ्चो कालाग्न्यवधिधारिकाम्[3] ॥

शिखास्थाने द्वादशान्ते, हालामिति अलिपुरम्, गोश्रुतिमिति गोकर्णम्, नृपसद्म राजगृहम्, वैरिञ्चोमिति ब्रह्माणीम्, श्रीशैलाख्यं तु तत्पीठमित्यर्थ इति जयरथेन व्याख्यातम् । शारदातिलकटीकायां राघवभट्टेन "अष्टपीठं महादेव्या अष्टाष्टक-

१. सेतुबन्धे, पृ० २२; २. तन्त्रालोके—१५।८२-९६ ।
३. तत्रैव—२९।५-६३ ।

समन्वितम्[1]" इत्यस्य व्याख्यायां चतुष्षष्टिपीठानां संकेतः श्लोकत्रयेण कृतः। तथा हि—

मायामङ्गलभागवामनमहालक्ष्मीचरित्रा भृगु-
च्छायाछत्रहिरण्यहस्तिनमहेन्द्रोड्डीशचम्पापुरम् ।
षष्ठक्षीरकमञ्जनेश्वरपुरेलाश्चन्द्रपूः श्रीगिरिः
कोलाकुल्लकपूर्णपर्वतकुरुक्षेत्रैकलिङ्गार्बुदाः ॥
काश्मीरैकाम्रकाञ्चीमलयगिरिवरैकारकन्धूतदेवो
कोट्टाम्रातेशजालन्धरसुरभिमनीषाद्रिकाशीप्रयागाः ।
त्रिस्रोतः कामकोट्टोज्जयिनीमथुरं कोशलाकान्यकुब्जो-
ड्यानौङ्काराट्टहासा विरज इह ततः कुण्डिनं राजगेहम् ॥
नेपालपुण्ड्रवर्धनसालवपरसीरकामरूपकेदाराः ।
विन्ध्यमहापथगोश्रुतिकाम्पिल्यश्रीपीठमरुदेशाः[2] ॥

अर्थरत्नावल्यां पीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहशब्दा व्यवहृताः सन्ति; परन्तु परवर्तिनि काल एष विभागो नाङ्गीकृतः, सर्वाणि च तानि स्थानानि पीठशब्दोदर एवान्तर्भूतान्यभवन् ।

सिद्धान्तागमेषु चतुर्विंशत्युत्तरशतद्वयसंख्याकानि (२२४) भुवनानि निर्दिष्टानि। अत्रत्येषु पीठनामसु कानिचिदट्टहास-गोकर्ण-कुरुक्षेत्र-आम्रातकेश्वर-श्रीशैलप्रभृतीनि नामानि तत्राप्यवलोक्यन्ते। एतावतेदं ज्ञायते यत्पूर्वं तेषु सम्प्रदायेषु तानि तानि तन्त्रप्रधानानि पूजास्थानानि तत्तदाचार्याविर्भावस्थानानि वा तारतम्येन पीठोपपीठादिनाम्ना प्रसिद्धान्यभवन्। कालक्रमेण तेषां महत्त्वं विलुप्तप्रायमभूत्। शैवानि वैष्णवानि च तीर्थानि तत्र समावेशितानि। अद्यत्वे नानाग्रन्थेषु पठितानि पीठनामानि पञ्चशतानि ततोऽप्यधिकानि वा सन्ति। तानि 'दी शाक्त पीठाज्' इत्याख्ये ग्रन्थे द्रष्टुं शक्यन्ते। खेदस्यायं विषयो यत्साम्प्रतं प्राचीनानि बहूनि स्थानानि विस्मृतानि, विलुप्तानि वाऽभवन्। द्वादशज्योतिर्लिङ्गेषु द्वित्राणां ज्योतिर्लिङ्गानां काश्यादिक्षेत्रेषु वा कतिपयलिङ्गाधिष्ठितस्थानानां निर्णयः कर्तुं यदा न शक्यते, तदा का कथा पीठानां नामस्थानयोः परिचयस्य ?

एवञ्च—आगमशब्दार्थविचारः, यामलतत्त्वविमर्शः, रुद्रयामले विशेषविचारः, मातृकास्वरूपविमर्शः, मातृकावर्गविमर्शः, वर्णसंख्याविमर्शः, वर्णाभिव्यक्तिविचारः, तन्त्रशास्त्रस्य वैदिकत्वावैदिकत्वविचारः, तन्त्राणामुत्तमाधमभावविमर्शः, तन्त्रीयविभागत्रयविमर्शः, स्रोतोविभाग-पीठविभाग-आम्नायविभागानां विमर्शः, आम्नायविभागे त्रिपुरोपास्तिविमर्शः, मन्त्रस्वरूपविमर्शः, भावत्रयविमर्शः, मन्त्रजपे दोषनिरूपणम्, मन्त्रार्थमन्त्रचैतन्ययोर्विमर्शः, मुद्रास्वरूपविचारः, शैवागमीयपदार्थत्रयविमर्श इत्येवमादयो बहवो विषयविमर्शाः प्रसङ्गेन कृताः ।

---

१. शा० ति० १।८५, टीकायाम् ।　　२. शा० ति०, पृ० ५२-५३ ।

एषु विमर्शेषु आगमशास्त्रे कृतभूरिपरिश्रमाणां सुहृद्वरपण्डितश्रीव्रजवल्लभ-द्विवेदिमहोदयानां निबन्धग्रन्थतो मया भूरि साहाय्यं लब्धम्, तदर्थं तदीयां कृतज्ञतां वहामि ।

### रुद्रयामलस्योत्तरतन्त्रत्वविचारः

अस्योत्तरतन्त्रत्वविषयेऽत्रैव विचारः कृतोऽस्ति । तथा हि—

परा श्रीपरमेशानीवदनाम्भोजनिःसृतम् ।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम् ॥
शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना ।
ब्रह्मयामलवेदाङ्गं सर्वं च कथितं प्रिये ॥
इदानीमुत्तरकाण्डं वद श्रीरुद्रयामलम् ।
यदि भाग्यवशाद्देवि ! तव श्रीमुखपङ्कजे[1] ॥
एतदुक्तं महादेवोत्तरतन्त्रनिरूपणम् ।
मन्त्रसिद्धिलक्षणं तदुत्तमाधममध्यमम्[2] ॥

एतैः पद्यैः स्पष्टं प्रतीयते श्रीरुद्रयामलमुत्तरतन्त्रमिति ।

अथ चोत्तरषट्कनामा ग्रन्थतन्त्रग्रन्थेषु परिसंख्यातः, केरलविश्वविद्यालय-पुस्तकालये, मद्रपुरीराजकीयपुस्तकालये च प्राप्तुं शक्यते । अयं ग्रन्थो योगिनीहृदयदीपिका-यामपि संकेतितोऽस्ति । एतद्दर्शनेन ज्ञायते यदेष ग्रन्थो रुद्रयामलस्यैवांशभूत इति । त्रिपुरासिद्धान्तोऽप्यत्र प्रतिपादित इति । एतेन ज्ञायते यत् पूर्वकाण्डमपि यामलमस्ति । तत्र च शक्तियामल-विष्णुयामल-ब्रह्मयामलानां वर्णनमभवत् । एषां वेदाङ्गत्वं चापि उक्तम् ।

### यामलतन्त्रस्योपासनायाः समयः फलं च

'यामाः (प्रहराणि) सन्ति यस्यां सा यामिनी' अनया व्युत्पत्त्या यामिनीशब्दो निष्पन्नो भवति । यामशब्दाद् मत्वर्थीय इनिप्रत्ययः, स्त्रीत्वविवक्षायां ङीप् । योगरूढि-शक्त्या यामिनीशब्दो रात्रिपरतया विख्यातः । यामशब्दः प्रहरात्मकसमयविशेष-वाचकः । यामचतुष्टयवती यामिनी (रात्रिः) भवति । अस्य यामचतुष्टयस्य महनीयं महत्त्वं शास्त्रेषु ख्यापितोऽस्ति । उक्तञ्च—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी'[3] इति ।

अनया गीतोक्त्या ज्ञायते यत् संयमिनः निशायां जाग्रति । जागरितावस्थायां संयमं कुर्वन्तीत्यर्थः । एवं च यामिनीविहितानि कर्माणि यत्राश्रीयन्ते, तत्तन्त्रं यामलं नाम । अनया रीत्या रात्रौ एकान्ततायाः लाभाद् यामलतन्त्रस्य साधनायाः गोप्यत्वं सुरक्षितं भवति ।

---

१. रु० या० १ १-३; २ तत्रैव —२८।१० ।
३. श्रीमद्भगवद्गीता—२।६९ ।

शिवस्य गुप्तरहस्यं शक्तिरेव, शक्तेश्च गुप्तरहस्यं शिव एव विजानाति, अनयोश्च गोपनं यो जानाति, स साधको यामलीय इति कथ्यते। अथ च यमनं = नियमनं यामः, यमुधातोर्घञ्प्रत्ययो भावे कृते सति यामशब्दो निष्पद्यते। ततश्च यामं नियमनं = नियमं लाति = आदत्ते इति यामलं तन्त्रम्। "आतोऽनुपसर्गे कः"[1] इति पाणिनिसूत्रेण कर्तरि कप्रत्यये सति यामलशब्दो निष्पन्नो भवति। तदर्थश्च नियमनाधायकं तन्त्रम्। नियमनमर्थाद् नियन्त्रणं सम्पादयति एतत् तन्त्रम्। एतावता सर्वतोभावेन सुरक्षिततत्त्वमदसीयसाधनाया इत्यागतम्। भगवान् रुद्रः स्वयं नानातन्त्रार्थ-पारगः सर्वज्ञः, तत्सम्बन्धिनी एषा साधना कुलतन्त्राभिसाधिका प्रोच्यते। एनां साधनामन्तरा साधकस्य सिद्धिः कथं स्यात् ?

उक्तञ्च रुद्रयामले तन्माहात्म्यवर्णनमुखेन—

ये जानन्ति महाकालं यामलं कलिपावनम्॥
आब्रह्मस्तम्बपर्यन्तं करे तस्य न संशयः।
तत्प्रकारमहं वक्ष्ये निगमागममङ्गलम्॥
यस्माद्रुद्रो भवेज्ज्ञानी नानातन्त्रार्थपारगः।
यामिनीविहितं कर्म कुलतन्त्राभिसाधनम्॥
महावीरहितं यस्मात् पञ्चतत्त्वस्वरूपकम्।
लङ्घनं नास्ति मे नाथ अस्मिन् तन्त्रे सुगोपनम्॥
ततो यामलमाख्यातं चन्द्रशेखर शङ्कर।
यदि न पठ्यते तन्त्रं यामलं सर्वशङ्करम्।
तदा केन प्रकारेण साधकः सिद्धिभाग् भवेत्[2]॥

एवञ्च शिवशक्त्योरभेदभावनयाऽनुग्रहप्राप्तिर्भवति, ततश्च महतः सुखस्या-वाप्तिर्भवति। उक्तञ्च—

भावादनुग्रहप्राप्तिरनुग्रहान्महासुखी[3]। इति।
भावेन ज्ञानमुत्पन्नं ज्ञानान्मोक्षमवाप्नुयात्[4]॥ इति च।

एवञ्च निरतिशयसुखमेव मोक्षपदवीमधिरोहति। तच्च तन्त्रशास्त्रप्रतिपाद्य-ज्ञानहेतुकमपि समस्तस्य संसारस्याधिष्ठातुः परमशिवस्य प्राणशक्तिरूपायास्त्रिपुरसुन्दर्याः सायुज्यमन्तरा नैवास्वादयितुं शक्यते। तथा चोक्तं सौन्दर्यलहर्य्याम्—'परानन्दाभिख्यं रसयति रसं त्वद्भजनवान्' इत्यादिना।

### यामलतन्त्रीयचक्राणां साध्यफलानि

अस्मिन् रुद्रयामलाख्ये तन्त्रेऽनेकानि चक्राणि तत्साध्यफलानि च वर्णितानि सन्ति। तथा हि—

---

१. पा०सू० ३।२।३; २. रु० या० १।९१-९५, १०५।
३. तत्रैव—१।११८; ४. तत्रैव—१।२२१।

तारचक्रं राशिचक्रं कूर्मचक्रं तथापरम् ।
शिवचक्रं विष्णुचक्रं ब्रह्मचक्रं विलक्षणम् ॥
देवचक्रं ऋणिधनि उल्काचक्रं ततः परम् ।
वामाचक्रं चतुश्चक्रं सूक्ष्मचक्रं ततो वदेत् ॥
तथाकथहचक्रं च कथितं षोडशं प्रभो ।
एतदुत्तीर्णमन्त्रं च ये गृह्णन्ति नरोत्तमाः ॥
तेषामसाध्यं जगति न किमपि वर्तते ध्रुवम्[1]॥

अधिकारिभेदेन चक्रस्योपयोगिता वर्तते । यथा वैष्णवानां कृते ताराशुद्धिः, शैवानां कोष्ठशुद्धिः, शाक्तानां राशिशुद्धिः, कृष्णसाधकानां कृतेऽकडमशुद्धिरपेक्ष्यते । उक्तश्च—

ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिः त्रैपुरस्य गोपालेऽकडमः स्मृतः[2] ॥ इति ।

एवमेव बाला-भैरवी-कुमारी-ललिता-कुरुकुल्लादिसाधने राशिचक्रम्, प्रत्यङ्गिरा-साधने उल्काविद्यादिसाधने च शिवचक्रम्, कालिका-चर्चिका-विमला-सम्पत्तिप्रदादि-साधने विष्णुचक्रम्, छिन्नायाः, श्रीविद्यायाः, कृत्यायाः, नक्षत्रविद्यायाः, कामाख्यायाः, ब्रह्माण्याश्च साधने ब्रह्मचक्रम्, वज्रज्वाला-महाविद्या-गुह्यकाली-कुब्जिकादिसाधने देवचक्रम्, अट्टहासा-कामेश्वरी-राकिणी-मन्दिरादिसाधने ऋणिधनिनाम महाचक्रम्, श्रीविद्या-भुवनेशानी-भैरवी-पृथ्वी-वीणा-वामनीप्रभृतीनां च साधनेषु उल्काचक्रादि प्रयोक्तव्यं भवति ।

## अकथहचक्रस्य वर्णनम्

प्रसङ्गादत्राकथहचक्रस्येषद्वर्णनं विधीयते । अस्य चक्रस्य निर्माता ज्ञाता साधकश्च कामरूपी भवति, इह लोके निखिलकामनासिद्धिः, अन्ते च मोक्षावाप्तिस्तस्य भवति । अस्य चक्रस्य निर्माणाय भूर्जपत्रमयम्, ताम्रमयम्, राजतम्, सौवर्णम्, मणिमयं वा चतुरस्रं सर्वतः समकोणमाधारपत्रं ग्राह्यम् । तत्र चत्वारि कोष्ठानि निर्मातव्यानि। पुनः प्रतिकोष्ठं चतुर्णां कोष्ठानां निर्माणेन षोडशकोष्ठानि निर्मितानि भवन्ति । तत्रापि प्रतिकोष्ठं कोष्ठचतुष्टयस्य निर्मित्या चतुःषष्टिः कोष्ठानां जायते । तेषु दक्षिणतः क्रमेणाकारादारभ्य क्षकारान्ता वर्णा लेखनीयाः । तथा चोक्तम्—

चतुरस्रे लिखेद् वर्णांश्चतुःकोष्ठसमन्विते ॥
चतुःकोष्ठे चतुष्कोष्ठे चतुश्चतुर्गृहान्वितम् ।
मन्दिरं षोडशं प्रोक्तं सर्वकार्यार्थसिद्धिदम् ॥
चतुरस्रं लिखेत् कोष्ठं चतुःकोष्ठसमन्वितम् ।

---

१. ब० या० २।१२९-१३२; २. तत्रैव—२।१३४-१३५ ।

पुनश्चतुष्कं तत्रापि लिखेद् धीमान् क्रमेण तु ॥
सर्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु ।
अकारादिक्षकारान्तं लिखित्वा गणयेत्ततः[१] ॥

एवं चाकारादेः क्षकारान्तस्य च 'अक्षमिति', 'अहमिति' वा संज्ञा शास्त्रेषु प्रसिद्धा । सृष्टेरादिरकारोऽन्त्यो हकारः कथ्यत एव । अकार-हकारयोः सामरस्यमेव पराहन्तास्वरूपेण समुल्लसति । तथा चोक्तम्—

अहमित्येकमद्वैतं यत्प्रकारात्मविभ्रमः ।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ॥
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ।
अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम्[२] ॥

इदमेव तत्त्वमहन्तेदन्तेति पदाभ्यां सर्वत्र शास्त्रे व्यपदिश्यते । एषा वर्णमातृका-चक्रोक्तिः अक्षमालाक्रमेण रहस्यसम्पादयित्री सती नानाचक्रसम्पादिका भवतीति जानन्त्येव सर्वे आगमविदः । उक्तञ्च—

अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम् ।
अक्षमातेति विख्याता मातृका वर्णरूपिणी[३] ॥

इदमेव तत्त्वमक्षरपदेनापि व्यवह्रियते, भगवद्गीतायां ब्रह्मापरपर्यायतयेदमेव उक्तमस्ति । तथा हि—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः[४] ॥ इति ।

एषा वर्णमातृका स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी, प्रकाशानन्दसारा बिन्दुमयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी परमयोगिभिरनिशमनुस्मियते । यतश्च परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयबिन्दुरूपेणोह्यमाना त्रैविध्यं गता त्रिपुरा । एवं त्रिचक्र-त्रिशक्ति-त्रिधाम-त्रिबीज-त्रितत्त्व-त्रिगुण-त्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करण-रचना-वैचित्री-चतुरा-त्रैविध्येन सर्वाध्वव्यापिनी त्रिपुरा महती सुन्दरीति महात्रिपुरसुन्दरीति विख्याता[५] ।

सा चेयं सर्वचक्र-सर्वतन्त्र-सर्वशक्तीनां जनयित्री, वर्णसंघट्टशरीरा सती शब्द-राशिभूता त्रिपुरा, मोहिनी, कला, कालिकेत्यादिभिः परःसहस्रैः शब्दैर्व्यपदिश्यमाना परावागात्मिका ज्येष्ठा-रौद्रयम्बिकाख्यशक्तिप्रसरसम्भेदवैचित्र्येण सर्ववर्णोदयकारणभूता सप्तकोटिमहामन्त्राणामुत्पादयित्री, भट्टारकपरमशिवस्वरूपा, षट्त्रिंशत्तत्त्वप्रसरणहेतु-भूता, संविदेव मातृकापदेन सर्वत्र प्रख्यातिं प्राप्ताऽस्ति । उक्तञ्च—

१. रु० या० ५।२-५ ; २. वरिवस्यारहस्ये, पृ० ५२; ३. परात्रिंशिका—पृ० १९४ ।
४. श्रीमद्भगवद्गीता–८।३; ५. नित्याषोडशिका० २।६-७ ।

सर्वे वर्णात्मिका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका[१]॥ इति ।

काऽपि साधना, कोऽप्युपायो मन्त्रतत्त्वरूपाया मातृकाया ज्ञानमन्तरा भवितुं नार्हति । अतो वर्णमातृकायाः स्वरूपज्ञानाय प्रयुक्तानि चक्राणि रुद्रयामलतन्त्रे पूर्वमेव निरूपितानि सन्ति । उक्तञ्च—

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः ।
सर्वं तस्य वृथा देवि किं तस्य जपपूजनैः ॥
ध्यानावधारणेनैव तथा योगसमाधिना ।
वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः[२] ॥ इति ।

शिवस्य महाकाल्याश्च कण्ठे निबद्धा मुण्डमाला ज्ञानराशेः संकेतभूता, यतो हि सर्वाणि ज्ञानेन्द्रियाणि मुण्ड एव व्यवतिष्ठन्त इत्यपि तन्त्रशास्त्ररहस्यं न विस्मरणीयम् । उक्तञ्च—

मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम् ।
नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम्[३] ॥ इति ।

सा चेयं मातृका पञ्चाशत्संख्याकान्, एकपञ्चाशत्संख्याकान्, द्विपञ्चाशत्संख्याकान्, चतुःषष्टिसंख्याकान् वा वर्णान् स्वस्मिन् समावेशयन्ती अनन्तकोटिब्रह्माण्डाधीशानामनन्तब्रह्म-विष्णु-रुद्रादीनां जननी, अकारादिक्षकारान्तबीजरूपा रुद्रयामलग्रन्थस्योपजीव्यभूता संकीर्त्यत इति ।

---

१. तन्त्रसद्भावे द्रष्टव्यम् । २. कामधेनुतन्त्रे—१।४,५; ३. तत्रैव—१ । ६ ।

# काश्यां मरणान्मुक्तिः

आचार्यश्रीकरुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी
अध्यक्षचरश्च,
उत्तरप्रदेश-संस्कृताकादम्याः

❀ ❀ ❀

काश्या महिष्ठता, वरिष्ठता, गरिष्ठता, श्रेष्ठता च नानाहेतुभिर्गीयते। मन्ये, तेषु नूनं काशीपुर्या नगर्या मोक्षदायकत्वमन्यतमम्। अत एवोच्यते—"**काश्यां मरणान्मुक्तिः**"। सप्तसु मोक्षदायिपुरीषु प्रसिद्धे पुराणपद्ये—

**अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।**
**पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥**

मध्यमणिरिवास्या नाम राराज्यते।

भगवत आद्यशङ्कराचार्यस्य स्तोत्रे पठितम्—

कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम्।
ज्ञानविहीने सर्वमनेन भवति न मुक्तिर्जन्मशतेन ॥

अत्र गङ्गासागरगमनादिकं कर्म ब्रह्माद्वैतवादिज्ञानमार्गिणां साम्प्रदायिकानां मतेन द्वैतबुद्धिजुष्टाज्ञानप्रेरितं काम्यं कर्म। तादृशाज्ञानध्वंसं विना अद्वैतानुभूतिमयज्ञानेन प्रकाशात्मकेन सच्चिदानन्दरूपेण द्वैतबुद्धिनिरासं विना कथमपि मोक्षावाप्तिर्न सिद्ध्यतीति चेत्तर्हि अत्रोच्यते—नानापुराणेषु=मात्स्ये, कौर्मे, पाद्मे, वैष्णवे, लैङ्गे, शैवे, वायवीये, देवीभागवतप्रभृतिषु, तत्र विकीर्णानि वचनानि, यैः काश्या मुक्तिप्रदत्वं द्योत्यते। स्कन्दमहापुराणान्तर्गतकाशीखण्डे, ब्रह्मवैवर्त्तमहापुराणान्तर्गतकाशीरहस्ये च शताधिकेषु प्रसङ्गेषु पुण्यपुर्य्या अस्या मोक्षदायकत्वं मुहुर्मुहुरुद्घोषितम्। सर्वेषां वचनानां यद्युद्धरणान्यत्र सङ्कलितानि भवेयुस्तदा स्वतन्त्र एव विस्तृतो ग्रन्थो भवेत्। काश्चन सूक्तयश्चाप्यत्र सन्ति, यथा—

"अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि वै"।

अपि च—

प्रयागादपि तीर्थात्प्रागिदमेव परं स्मृतम्।
अनायासेन चैवात्र मोक्षप्राप्तिः प्रजायते ॥

मत्स्यमहापुराणे च—

एक एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि।
एकेन जन्मना देवि ! मोक्षं प्राप्स्यस्यनुत्तमम् ॥

न केवलं पुराणेष्वेव, बृहज्जाबाल-रामतापनीयाद्युपनिषत्सु सनत्कुमारसंहितादिषु च निर्दिष्टमस्ति यद्भगवती काशीपुरी मोक्षादायिकासु महिष्ठा। अत एतन्निर्विवादमेव यदियं पुरी मृतेभ्यो झटित्यनायासेन मोक्षं प्रददाति। नहि केवलं मनुष्येभ्योऽपि तु आकीटपतङ्गचतुर्विधजङ्गमजीवेभ्यः । मानवाः किल यावज्जीवनं पापाचारवन्तो वेदस्मृतिपुराणविहितकर्माण्यनाचरन्तोऽपि प्राणेषु प्रयातेषु क्षेत्रमाहात्म्यवशान्मोक्षमधिगच्छन्ति।

पूर्वोक्तेषु सर्वेषु श्रुतिस्मृतिपुराणादिष्वेतदप्यभिहितं यदत्र मरणवेलायां शिवकृततारकमन्त्रोपदेशादेव मुक्तिरिति तु नूनं निर्विवादं तथ्यं धार्मिकाणामास्तिकहिन्दूनां कृते ।

स्वीकृते चैतत्सिद्धान्ते "यन्मरणवेलायां विश्वनाथशिवकृततारकमन्त्रोपदेशान्मुक्तिरिति", जिज्ञासोदेति कस्तारको मन्त्रः ? संसारसागरे निमग्नानां जीवानां जन्ममरणपापपुण्यादिभोगात्तारयति इति तारको मन्त्रः। लोके तमेव मन्त्रं लोका रामतारकमन्त्रं षडक्षरम् '**ॐ नमो रामाय**' इत्यामनन्ति। रामतापनीयोपनिषदि तदेव विज्ञापितम् । बृहज्जाबालोपनिषन्मतेनाष्टाक्षरः '**ॐ नमो महादेवाय**' इति मन्त्रस्तारकः ।

देवीप्रणवसंज्ञको भुवनेश्वरीमन्त्रोऽपि 'भुवनेश्वरीसंहिता'मतेन, शिवरहस्यद्वादशांशोक्तरीत्या तारकमन्त्रः, यथा—

"अनिलो मृगनाभिगन्धैरथ काशीप्रणवोपदेशकाले।
हरते भवजं श्रमं (जन्मजरामरणजं भयम्) नराणां हरवामार्धकुचोत्तरीव जन्म" ॥

इति पुराणरीत्या बैजिकः प्रणवस्तारकमन्त्रः। शिवरहस्ये सप्तमांशे—

"तारकं ब्रह्म परमं शिव इत्यक्षरद्वयम्"[1] ।

---

१. इदमत्र विशेष्यं यल्लिङ्गधारकाणां वीरशैवानां मतेन—

इदमेव परं ब्रह्म काश्यां मल्लिङ्गधारिणाम् ।
अन्तकालोपरक्तानां मायादि व्युपदिश्यते ॥

इति रीत्या 'शिव' इत्यक्षरद्वयात्मक एव तारको मन्त्रः ।

अपरञ्च तथा तत्रैव द्वादशांशे अन्तिमाध्याये—"एवं निवासरसिकस्य हरोऽन्तकाले तारं (तारकमन्त्रम्) स पञ्चार्णमथो दिदेश" इति वचनात्षडक्षरः शिवमन्त्रः शिवतारकमन्त्रः "ॐ नमः शिवाय" इति । अन्यदपि वचनं सन्दर्भेऽमुस्मिन्—

ब्रह्मज्ञानेन मुच्यन्ते नान्यथा जन्तवः क्वचित् ।
ब्रह्मज्ञानं तदेवाहं काशीसंस्थितिभागिनाम् ॥

इति वचनेन काशीखण्डे प्रतिपाद्यते यन्महावाक्यरूपस्तारकमन्त्रः ।

अत्र त्वेतद्दिङ्मात्रप्रदर्शनम् । तथ्यं त्वेतावदेव यज्जीवात्मनां प्राणप्रयाणसमये साक्षाच्छिवस्तारकमन्त्रमुपदिशन्नज्ञानजन्यतमो ध्वंसयन् तारकमन्त्रद्वारा ज्ञानमाविर्भावियति, येन जीवः सायुज्यमुक्तिं लभते। नानोपनिषत्संहितास्मृतिपुराणादीनां वचनानां सार एषः। ते भिन्न-भिन्नवचनानुसारेण भिन्ना मन्त्राः। तेषु कं तारकमन्त्रं भगवांच्छिव उपदिशतीति तु शिव एव जानाति।

अत्र केचन वदन्ति यत्सर्वे तारकमन्त्रा मोक्षदायकाः। शिवस्तु कश्चनापि तारकमन्त्रमिषेण महावाक्यप्रतिपादितज्ञानप्रकाशोदयं काश्यां मृतानां मरणान्तवेलायामाविर्भावयति, येनाज्ञानजन्यतमोध्वंसो जायते, जीवात्मा नित्यः शुद्धोऽज्ञानानावृतः प्रकाशमयो भूत्वा निर्वाणपदं सायुज्यरूपमधिगच्छति।

अपरे तु अनेकेषु तारकमन्त्रेषु कस्य मन्त्रस्योपदेशो नूनं मोक्षदायक इति नियमाभावेन महावाक्योपदेशस्यैवाज्ञाननाशाय सर्वासु श्रुतिषु सिद्धान्तितत्वेन प्रसिद्ध एव महावाक्योपदेशः शिवेन क्रियते—रामादिमन्त्रोपदेशप्रतिपादकानि वाक्यानि तु तत्तन्मन्त्रवाच्यब्रह्मोपदेशपराणीति वदन्ति।

अत्र केचन जिज्ञासन्ते—यदा हि (पुराणकथानुसारम्) शिवस्यागमनं काशीसेवनार्थं न बभूव, ततः पूर्वं तारकमन्त्रोपदेष्टुरभावाद् उपदेशं विना काश्यां पञ्चत्वं प्राप्ताः प्राणिनः कथं मुक्ता बभूवुरित्यत्र प्रोच्यते—

कलावन्तर्हितो देवस्तत्पुरं च विशेषतः।
पुरी तु वसते नित्यं सर्वप्राणिविमोक्षदा॥

परमस्वतन्त्रा भगवतीस्वरूपा काशी स्वयं पराशक्तिः। सैव उपदेशं विधाय जनान्मोक्षयतीति। अत्र **'काश्यां मरणान्मुक्तिः'** इत्याप्तवचनं प्रमाणीकर्तुमुपायान्तराभावाद् एषा व्याख्याऽवश्यं करणीयेति पौराणिकाः।

एतमेवाशयं साधयन्ति, स्वतन्त्रायाः काश्या मोक्षदायकत्वं प्रतिपादयन्ति, शतशः श्रुतिपुराणादिवचनान्युपलभ्यन्त इति केचित्[1]।

---

१. अत्राधस्तात्कानिचन वचनानि ससन्दर्भाणि अज्ञातसन्दर्भाण्युल्लिख्यन्ते, पाद्मे यथा—

काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः।
ततो ब्रह्मकृतां याति न परावर्त्तते पुनः॥

अपरं च—'मण्डूकमत्स्याः क्रमयोऽपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति'।

तत्रैव—

भूमौ जलेऽन्तरिक्षे वा यत्र क्वापि मृतो जनः।
ब्रह्मत्वमाप्नोति काशी शक्तिमयी हिता'॥ ( स्कन्द० १२, १३)

भस्मजाबालोपनिषदि द्वितीयाध्याये—

"त्रिशूलगां काशीमधिश्रित्य त्यक्तासवोऽपि मय्येव संविशन्ति"।

स्कन्दपुराणान्तर्गतकाशीखण्डे, कोटिरुद्रसंहितायां शिवमहापुराणस्य, काशीरहस्ये च शतशः स्थानेषु काश्या मोक्षदायकत्वं समुद्घोषितं वर्त्तते ।

परमात्मज्योतिर्लिङ्गरूपा हि भगवती काशी साक्षाच्छिवशक्त्यात्मिका । नूनं हि पञ्चक्रोशात्मिका काशी न भूमिसीममात्रम् । मन्ये, सा मोक्षदानाय मूर्त्तिधारणं

जाबालोपनिषदि—"अत्र हि प्राणेषूत्क्रामत्सु रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृतो भूत्वा मोक्षीभवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तमेव निषेवेत" ।

मुण्डकोपनिषद्यपि प्रतिपादितम्—

यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः ।
जन्तोर्दक्षिणकर्णं तु तारकं समुपादिशत् ।।

(लघु) आश्वलायनस्मृतौ यथा—

"यः कश्चिन्मानवो लोके वाराणस्यां त्यजेद्वपु ।
स चाप्येको भवेन्मुक्तो नान्यथा मुनयो विदुः ।। (आ० स्मृ० १।१८९)

प्रसिद्धोऽयं श्लोको लोके सनत्कुमारसंहितायाः—

रथ्यन्तरे मूत्रपुरीषमध्ये चाण्डालवेश्मन्यथवा श्मशाने ।
कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभतेऽत्र (काश्याम्) मोक्षम् ।।

गर्गसंहितायाञ्च—

विश्वेश्वरस्य देवस्य काशी नाम महापुरी ।
यत्र पापी मृतः सद्यः परं मोक्षं प्रयाति हि ।।

प्राचीनतमपुराणानां पुराणं महाभारतमप्युपदिशति—

कीटपक्षिपतङ्गानां तिरश्चामपि केशव ।
महादेवप्रपन्नानां न भयं (पुनर्जन्मभयं) विद्यते क्वचित् ।।
(म० भा०, अ० प० १८।६८)

शिवपुराणेऽपि (कोटिरुद्रसंहितायाम्)—

इयं च (काशी) शुभदा लोके कर्मनाशकरी मता ।
मोक्षप्रकाशिका काशी ज्ञानदा मम सुप्रिया ।। (शि०पु०२२।२०)

तत्रैवाग्रे—

अन्यत्र प्राप्यते मुक्तिः सारूप्यादिमुनीश्वराः ।
अत्रैव प्राप्यते जीवैः सायुज्या मुक्तिरुत्तमा ।।

अन्यच्च—

मम क्षेत्रे मोक्षदे हि यो वा वसति मानवः ।
यथा तथा मृतः स्याच्चेन्मोक्षमाप्नोति निश्चितम् ।।

कृतवती। तयैव शिवरूपेण तारकमन्त्रमुपदिशति नात्रेतरसाधनस्य कस्यचिदपेक्षा। काशीरहस्ये[1] उक्तम्—

मूर्तिमत्याः काशिकायाः कोऽधिकारी महेश्वर !।
क्षेत्रमूर्त्तिप्रभेदेन स्थितया किं प्रयोजनम् ? ॥

महादेव उवाच—

क्षेत्रे ऋणत्रयात्काशी मोचयेत्सर्वदेहिनः।
आधारभूता जीवनामाद्या प्रकृतिरव्यया॥
मूर्त्तिरूपा चित्स्वरूपाऽविमुक्तेश्वरसेवया ।
पूर्णरूपा स्वमाहात्म्यं स्वयमेव प्रकाशयेत्[2] ॥

इत्थं च काशीरहस्यानुसारं काशी न जडभूमयी। नूनं चिच्छक्तिसमृद्धा ज्योतिर्लिङ्गशिवस्वरूपा स्वयं तारकमेव मन्त्रमुपदिशन्ती, जीवानां समानि पापानि निर्दहन्ती, मायाजनितमोहान्धकारं दूरयन्ती, अद्वैतानुभूत्यात्मकज्ञानं प्रकाशयन्ती 'महाज्ञानमये अविमुक्तके[3]' मुक्तिं सर्वजीवेभ्योऽमृतेभ्यो वितरति। एष काशीरहस्याध्यायः सप्तदशः, अस्मिन् सन्दर्भे विशेषरूपेण मननीयः। सा हि काशी—

एहि काशि महाभागे सर्वलोकहितप्रदे ।
महालिङ्गैकनिलये योनिरूपे परात्मिके[4] ॥

---

१. इतः पूर्वं तत्रैवोक्तम्—

पूजिता सा प्रयत्नेन काशीवासफलप्रदा ।
द्वादश्यां प्रातरेव काशीं यः पूजयेत्सुधीः॥
तस्य पापे न रमते बुद्धिर्धर्मे प्रवर्त्तते ।
चतुर्विधाश्च ये जीवा ये च वेदादयः परे॥
ते सर्वे मुक्तिमायान्ति काश्यां स्थावरजङ्गमाः॥
(का० रह० १७।१७-१९)

२. काशीरहस्यम्—अध्या० १७, श्लो० २०-२२।

३. काशीरहस्यम्, अध्या० १७, श्लो० २७।

४. (क) महालिङ्गैकनिलये इत्यस्याशयः पञ्चक्रोशात्मकज्योतिर्लिङ्गस्वरूपे। अत एव तस्मिन्नेवाध्यायेऽग्रे काश्याः स्वयमुक्तिः—
"प्रतिज्ञा मम देवेश ! स्थावरा जङ्गमा जनाः ।
तारणीयाः सर्वतो ये सा गच्छति कलौ शुभा" ॥ (का० र० १७।४१)

(ख) अविमुक्तं महत्क्षेत्रं पञ्चक्रोशपरीमितम् ।
ज्योतिर्लिङ्गं हि विज्ञेयं तद्धि विश्वेश्वराभिधम् ॥ (का०र० २६।१३१)

पञ्चक्रोशात्मकक्षेत्ररूपिण्या भगवत्याः काश्या महिमा अनितरसाधारणः काशीरहस्ये द्वितीयाध्याये प्रोक्तम्—"तत्क्षेत्रमहिमानं कः सम्यग्वर्णयितुं क्षमः[१] ?"
(श्लोकः—४२)

काशीरहस्ये कामकलाख्यवेश्योपाख्यानम्, तत्र काश्या उपदेशप्रदवृत्तिप्रसङ्गे—

इयं काशी देवी सकलपुरुषार्थैकजननी
मुमुक्षून् या सर्वाञ्जितकरणदेहान् सुमनसः।
महापापान् क्रूरान् गुरुनिगमदेवद्विजगवान्
द्रुहस्तानप्याद्या गमयति परं स्वात्मसदनम् ॥(का०र० १७।२९)

काशी भगवती स्वयं परा-शक्तिरिति सिद्धम्। सा च कदाचित् स्वयमेवाखण्डज्ञानबोधात्मकं महावाक्योपदेशं करोति, कदाचिच्च स्वप्रतिनिधिभूतेनाभिन्नेन पञ्चक्रोशात्मकज्ज्योतिर्लिङ्गरूपसदाशिवेन तत्कार्यं सम्पादयति।

---

(ग) छत्राकारं तु किं ज्योतिर्जलादूर्ध्वं (महाप्रलयकालीनसर्वप्लावकजलादूर्ध्वम्) प्रकाशते।
निमग्नायां धरण्यां तु न निमज्जति तत्कथम् ॥

तथा च काशीरहस्ये—

सदाशिवो महादेवो लिङ्गरूपधरः प्रभुः।
मया स्मृतो लोकगुप्त्यै प्रदेशपरिमाणतः ॥
लिङ्गरूपधरः शम्भुर्हृदयाद्बहिरागतः।
वृद्धिमासाद्य महतीं पञ्चक्रोशात्मकोऽभवत् ॥
आपातालादावैकुण्ठं व्याप्य चोर्ध्वमवस्थितः ॥ (का०र०२।१०६-१०८)

अन्यच्च तत्रैव—

कृत्वा बहूनि पापानि काश्यामेव कलौ यदि।
म्रियते यातनान्ते तु (दण्डरूपभैरवयातनाभोगानन्तरम्) शुद्धो मोक्षमवाप्नुयात् ॥

१. तीर्थानि यानि लोकेऽस्मिन् जन्तूनामघान्यहो।
तानि सर्वाणि शुद्ध्यर्थं काशीमायान्ति नित्यशः ॥
यस्तु काश्यां वसेज्जन्तुः सर्वव्यापारकृन्नरः।
तस्यापि या गतिः प्रोक्ता न सा यज्ञैनं चान्यतः ॥
स्मरन्ति ये नराः काशीं यत्र कुत्रापि संस्थिताः।
तेऽप्यघौघविनिर्मुक्ता भवन्ति ज्ञानभागिनः ॥
परं साहसमालम्ब्य काश्यां स्थेयं मुमुक्षुभिः।
साहसात्सिद्धिमाप्नोति नरो विकलमानसः ॥ (का०र० २।४२-४९)

अत्र मरणवेलायां मुक्तिप्राप्तिविचारप्रसङ्गे दिक्कालकृतविशेषो नैव विचार्यते, यथा—"उत्तरं दक्षिणं चापि नायनं च विचारयेत्"। अर्थादुत्तरायणो यथा मोक्षदो भवति, तथैव दक्षिणायनोऽप्यत्र। तथा च सनत्कुमारसंहितायाम्—"रथ्यन्तरे मूत्रपुरीषमध्ये चाण्डालवेश्मन्यथवा श्मशाने" इति।

पद्मपुराणेऽपि—"काशी शक्तिरूपा हिता"। अत्र काशीमरणजन्यमोक्षप्राप्तिप्रसङ्गे नाधिकार्यपेक्षेति तात्पर्यम्[1]।

मुक्त्यधिकारिणश्च त्रिधेति केचिद् रहस्यवेदिनः। तदपि संक्षेपेणात्र निगद्यते। उत्तममध्यमकनिष्ठभेदेन ते त्रिविधाः। उत्तमास्तु काशीरहस्योक्तसद्धर्माचरणवन्तः। ते चापि द्विविधाः—(क) निष्कामसत्कर्मकर्तारः, (ख) स्वर्गादिलोकप्राप्तिकामाः काम्यकर्मकर्तारश्च। तत्राद्या देहपातोत्तरं दिव्यं देहं प्राप्य तत्क्षणमेव भगवतः शिवस्योपदेशेनाखण्डमद्वैतबुद्धिप्रकाशात्मकं ज्ञानमवाप्य सद्य एव सायुज्यमुक्तिं लभन्ते। द्वितीयास्तु सालोक्यमुक्तिं प्राप्य तल्लोके स्थिताः स्वपुण्यकर्मफलजन्यस्वर्गगोलोकादीनां भोगं भुक्त्वा तदनन्तरं दिव्यदेहं धृत्वा शिवोपदेशमाप्त्वा मुक्तिमधिगच्छन्ति।

मध्यमाधिकारिणस्तु पापकर्त्तारो भवन्ति। तेऽपि द्विविधाः—(अ) अबुद्धिपूर्वकपापकर्ता, (आ) बुद्धिपूर्वकपापाचारप्रवृत्ताश्च। तत्राद्यानां पश्चात्तापबुद्ध्याऽन्तर्गृहीपञ्चक्रोशी-प्रदक्षिणादिना सर्वतोऽधिकं गङ्गास्नानविश्वेश्वरदर्शनादिसत्कर्मभिर्दग्धदुराचरणानां नूनमुत्तमाधिकारिषु भवत्यन्तर्भावः। द्वितीयानां तु शास्त्रवचनानुसारेण प्रतिपापं त्रिशद्वर्षसहस्रभैरवयातनानन्तरं दिव्यदेहप्राप्त्यनन्तरं चोपदेशेन मुक्तिर्भवति[2]। विस्तरेणैतत्प्रसङ्गे पद्ममहापुराणं काशीमाहात्म्यवर्णनपरं पठनीयम्।

कनिष्ठास्तु अत्युत्कटपापकर्त्तारः। तेषां विषय एतदुक्तं यत्ते भैरवयातनोत्तरमपि देहान्तरे याते सति देशान्तरे जन्मावाप्य पुनः काश्यां मृता दिव्यदेहभागिनो तस्मिन् जन्मनि मरणकाले तारकमन्त्रोपदेशान्मोक्षं लभन्ते। एतस्मिन्प्रसङ्गे भिन्न-भिन्नपुराणेषु मतवैविध्यं लक्ष्यते, तदत्र विस्तरभयाद् नोपस्थाप्यते।

यद्यप्यभियुक्तोक्तिः—"काशीक्षेत्रे कृतं पापं वज्रलेपो भविष्यति" इति। तस्यायमभिप्रायः—पापकर्मजफलानुसारं देशदेशान्तरेषु नानायोनिषु जन्मान्यपि भैरवयातनाया अङ्गभूतानि। तेषां कष्टभोगोऽपि भैरवयातनाभोगः। अन्ते च दिव्यदेहप्राप्त्यनन्तरं तारकमन्त्रोपदेशेन सद्यो मुक्तिर्भवति। एतत्सर्वं क्षणमात्रभोगवन् न मुक्तिबाधकम्।

---

१. "कीटाः पतङ्गा मशकाश्च मत्स्याः"··· ····· ···· ····काशीरहस्यम्, काशीखण्डश्च। पद्मपुराणेऽपि—"मण्डूकमत्स्याः कृमयोऽपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति"।

२. पद्मपुराणोक्तिः—

"कायिकाकृतपापस्य भोगो रुद्र पिशाचता।
एकस्यैव तु पापस्य समानमयुतत्रयम्"॥

जीव एतस्मिन् काले कालाधिक्यं नानुभवतीति रहस्यम् । उक्तमपि भङ्ग्यन्तरेण—

"नाशनं वसनं वासः काश्यां येषां कुमार्गतः ।
कीकटेन समा काशी गङ्गाऽप्यङ्गारवाहिनी ॥
अशनं वसनं वासो येषां नैवाविधानतः ।
मगधेन समा काशी गङ्गाऽप्यङ्गारवाहिनी" ॥

इमा उक्तयो न विधिवाक्यानीति बोद्धव्यम्, तास्तु सदाचारसत्कर्मकरणाय प्रोत्साहदायिकाः ।

तत्त्वतस्त्विदमेव परमं रहस्यं तात्पर्यञ्च यत्काश्यां मरणादेव सा मुक्तिस्तारकोपदेशेन भैरवयातनाभोगेन लभ्यते, यां प्रबद्धशुद्धात्मज्योतिः साक्षात्कारवन्तो ज्ञानिनो लभन्ते[1] इति ।



---

१. शिवपुराणे कैलाससंहितायामेतत्सर्वमतिविस्तरेण विवृतं वर्त्तते काशीखण्डेऽपि पूर्वेऽध्याये तारकमन्त्रो हि प्रणवरूप इत्युक्तम् ।

# शाङ्कराद्वैतवेदान्तस्यानन्यसाधारणविषयोऽध्यासः

डॉ० महाप्रभुलालगोस्वामी

अध्यक्षचरः,

तुलनात्मकधर्मदर्शनविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

❀ ❀ ❀

अद्वैतदर्शनदृष्टिमाश्रित्य विविधविषयालोचनायामपि सुप्रसिद्धदर्शनसिद्धान्तमवलम्ब्यैवाद्वैतदर्शनेऽपि ते किल विषयाः समुपबृंहिताः। अत एव "तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते[1]", स्वसिद्धान्तानुग्राहकरूपेण स्वीकृता अपरदार्शनिकसिद्धान्ता अपि। अत एव निःसङ्कोचं सश्रद्धं कथयति भगवान् भाष्यकारः—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" (१।१।२) इत्यक्षपादसूत्रमुद्धृत्य "तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्"[2]। पद्मपादाचार्योऽपि तर्कलक्षणनिरूपणावसरे वात्स्यायनप्रभृतीनामवितथनिरूपणमुद्धरति—"प्रमाणशक्तिविषयतत्सम्भवासम्भवपरिच्छेदात्मा प्रत्ययः", अग्रे च—"क्व तर्हि तर्कस्योपयोगः? विषयासम्भवशङ्कायां तथानुभवफलानुत्पत्तौ तत्सम्भवप्रदर्शनमुखेन फलप्रतिबद्धविगमे"। एवमेवैतस्य पञ्चपादिकाग्रन्थस्य व्याख्याने प्रकाशात्मयतिरपि स्वविवरणे नैयायिकसिद्धान्तमेवान्ववर्तत। वाचस्पतिमिश्रस्य व्याख्याने तु विशिष्टप्रयत्नो न्यायानुसरणे विद्यत एवेत्यवितथं वचः। आचार्यानन्तरमन्ये भाष्यकारा न्यायमीमांसादिसिद्धान्तमनुसृत्य बहून् ग्रन्थान् व्यरचयन्। आचार्यरामानुजादीनां न्यायपरिशुद्ध्यादयो ग्रन्थाः प्रसिद्धा एव। अत आचार्यप्रणीते शास्त्रे प्रान्तीयगन्धलेशोऽपि नास्ति। सिद्धान्तस्याद्वैतत्वं यथा तथैव देशस्य सार्वभौमत्वमपि सुस्पष्टभावेन प्रतिष्ठापितम्। अध्यासस्य प्राथम्येन खण्डसत्यस्य सर्वथारोपितत्वमेव। अत एवाचार्योदयनेनात्मतत्त्वविवेके "नाद्वैतं नापि द्वैतम्" इत्यादिनाद्वैतदर्शन एवोपसंहरतोक्तम्—"यो निष्काम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्नोति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते ..... अथार्थाभावो यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः ..... यमाश्रित्याद्वैतमतोपसंहारः ..... यमाश्रित्य चरमवेदान्तोपसंहारः ..... यमाश्रित्य न्यायदर्शनोपसंहारः" (आत्मतत्त्वविवेकः, पृ० ९३५-९३६)। न्यायभाष्यकारेणाप्युक्तम्—

---

१. ब्रह्मसूत्रम्—१।१।१; २. तदेव—१।२।४।

"तदभयमजरममृत्युपदं ब्रह्मक्षेमप्राप्तिः" इति। आचार्यवाचस्पतिनाप्युक्तम्—मोक्षस्याभयरूपत्वं बहुधा श्रुतावुक्तमिति। ब्रह्मणोऽजरत्वकथनेन ब्रह्मपरिणामवादो निराकृतः। अमृत्युपदेन बौद्धमतं प्रत्याख्यातम्, यतः प्रदीपनिर्वाणस्येवात्मन उच्छेदस्यैवापवर्गत्वं तैः समर्थ्यते। अमृत्युपदं ब्रह्मस्वरूपमेवापवर्गः[1]।

अक्षपादसूत्रस्य चतुर्थाध्यायस्थप्रथमाह्निकस्यैकोनषष्टिसंख्याके सूत्रे वात्स्यायनेनोक्तम्—योऽकामो निष्काम आत्मकाम आप्तकामो भवति, न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्नोति" इति ( बृ० आ० ४।४।६ )। अतः श्रौतसिद्धान्तमवलम्ब्यैव न्यायसिद्धान्तः प्रदर्शितः। न्यायतात्पर्यपरिशुद्धिग्रन्थे न्यायशास्त्राधिकारिनिरूपणप्रसङ्ग उदयनाचार्येणोक्तम्—"तस्य च रूपाणि शमदमादिसम्पत्तिः, नित्यानित्यविवेकः, ऐहिकामुष्मिकयोगवैराग्यं मुमुक्षुता चेति[2]"। एतदेव विशेषणमथशब्दव्याख्याने श्रीशङ्कराचार्येणोक्तम्।

पूर्वमीमांसादर्शने जैमिनिना सूत्रेण मोक्षस्वरूपं नैव निरूपितम्; किन्तु "अथातो धर्मजिज्ञासा" ( पू० मी० १।१।१ ) एवम् "अन्वाहार्ये च दर्शनात्" ( १२।४।४७ ) इत्युपक्रमोपसंहारवाक्यतात्पर्यालोचनायां मीमांसाशास्त्रस्याभिप्रायो वेदाध्ययनानन्तरं वेदार्थरूपधर्मस्य विचारः कर्तव्य इत्येवमन्वाहार्यरूपदक्षिणायां ब्राह्मणस्यैव निर्देश इत्यृत्विक्कर्मणि केवलं ब्राह्मणस्यैवाधिकार इति वेदार्थधर्मविचार एव शास्त्रस्य प्रतिपाद्यो विषयः।

पूर्वमीमांसादर्शनस्य शबरस्वामिकृतस्य भाष्यस्य द्विविधं व्याख्यानं प्रसिद्धम्। एकं भट्टपादव्याख्याप्रस्थानमपरं प्रभाकरमिश्रप्रणीतशाबरभाष्यनिबन्धप्रस्थानम्। अनयोः प्रस्थानयोर्मोक्षसम्बन्ध आलोचना विद्यते। प्रभाकरो बृहतीव्याख्यान आत्मनः कर्तृत्वं भोक्तृत्वञ्च निर्दिश्योक्तवान्—"नन्वहङ्कारममकारावनात्मन्यात्माभिमानाविति"[3]। आत्मनः कर्तृत्वं भोक्तृत्वञ्च न सम्भाव्यते। एतत् सर्वम् आरोपितं मिथ्याऽभिमानमात्रम्। अहङ्कारप्रयुक्तमेव कर्तृत्वं ममकारप्रयुक्तमेव च भोक्तृत्वमिति तदाशयः। अनन्तरम् अहङ्कारस्य ममकारस्य मिथ्याभिमानमात्रत्व आत्मनः कर्तृत्वं भोक्तृत्वञ्च कथं सेत्स्यतीति शङ्कासमाधाने निगदितम्—"मुदितकषायाणामेतत्कथनीयम्, न कर्मसङ्गिनामित्युपरम्यते"। छान्दोग्यस्य सप्तमप्रपाठके नारदसनत्कुमारसंवादे व्याहृतम्—"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्

---

१. अभयमिति पुनः संसारभयाभावमाह 'अभयं च ब्रह्म' इति असकृदभयश्रुतेः। ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणतमित्याहुः, तान् प्रत्याह—अजरमिति। वैनाशिकाः प्राहुः—"प्रदीपस्येव निर्वाणो मोक्षस्तस्य चेतसः" इति।

२. ता० परि०, पृ० १५-१६ ; ३. बृ० २५६।

सनत्कुमारः" इति। श्रुतिं विचिन्त्य तथोक्तमिति प्रतीयते। बृहत्यामग्रेऽप्युक्तम्, आह च भगवान् द्वैपायनः—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" (गीता, ३।२६)। एतेन रागिणां कृत आत्मतत्त्वनिरूपणे बुद्धिभेदातिरिक्तं किमपि फलं नास्ति। कर्मसङ्गी रागी पुरुष आत्मतत्त्वं श्रुत्वा कर्मानुष्ठाने श्रद्धाविरहितो भवेत्। रागान्धत्वाच्चात्मतत्त्वावगतिरपि तेषां न सम्भाव्यते। अग्रे चोक्तं प्रभाकरेण—"तस्माद् न विवृतमत्र भाष्यकारेण भगवता वचनानुरोधात्, नाज्ञानात्" (बृहती, पृ० २५६)। अर्थाद् व्यासदेववचनमनुसृत्यात्मनो यथार्थस्वरूपं कर्ममीमांसाविवरणे न कृतम्, अकर्तृत्वाभोक्तृत्वात्मस्वरूपाज्ञानात् तथा न विहितमिति न शक्यते वक्तुमिति तत्तात्पर्यम्।

एतत्प्रभाकरवाक्यालोचनयाऽवगम्यते यदात्मनः पारमार्थिकस्वरूपावगतौ कर्माधिकार एवोच्छिन्नः स्यात्। उपनिषद्युपदिष्टमात्मतत्त्वज्ञानं कर्माधिकारविरोधीति। प्रभाकरव्याख्यायां पञ्चिकायां शालिकनाथः प्रभाकरसिद्धान्तानुवर्तनं कृतवान्। सिद्धान्तबिन्दुव्याख्याने गौडब्रह्मानन्दः सुस्पष्टमभिवदति—"आत्मा निष्प्रपञ्चो ब्रह्मैव, तथापि कर्मप्रसङ्गे न तथा वाच्यम्। उक्तं हि कृष्णेन भगवता—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" (गीता ३।२६)। एतत्कथनात् प्राक् ब्रह्मानन्देनोक्तम्—"प्रभाकरभट्टयोस्तु वेदान्तदर्शने विद्वेषाभावः"। (सिद्धान्तबिन्दुः, पृ० ३५४) उभयोरभिप्राय एक एव। प्रथमाध्यायस्य प्रथमपादस्य चतुर्थसूत्रव्याख्यान आचार्यः शङ्करः पूर्वपक्षमुत्थाप्य कथयति—"अत्रापरे प्रत्यवतिष्ठन्ते, यद्यपि शास्त्रप्रमाणकं ब्रह्म, तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते" (ब्र० सू० १।१।४, पृ० १०८)। अयमाशयः—यद्यपि शास्त्रेण ब्रह्मात्मैक्यं सिद्ध्यति, तथापि ब्रह्मात्मैक्यविषयकप्रतिपत्तिविधिवशत एव सिद्ध्यति, विधिसंस्पर्शनरहितशास्त्रेण ब्रह्मैक्यसिद्धिर्न सम्भाव्यते। एतद्व्याख्यायां भामत्यामुक्तम्—आचार्यदेशीयानां मतमुत्थापयति—"अत्रापरे प्रत्यवतिष्ठन्त इति"। आचार्यपदप्रयोगस्थाने आचार्यदेशीयः, आचार्यकल्प इत्युक्तम्। कल्पतरुग्रन्थे निष्कर्षप्रदर्शनार्थमुक्तम्—

अयन्तु सन्तु वेदान्ता मानं ब्रह्मात्मवस्तुनि।
किन्तु ज्ञानविधिद्वारेत्येष भेदः प्रतीयताम्॥ इति।
(कल्पतरुः, पृ० १०८)

मीमांसकानां मते जीवब्रह्मणोरैक्यं वेदान्तवाक्यप्रमाणकम्; परं वेदान्तवाक्येनैक्यं जीवब्रह्मणोर्नैव सेद्धुमर्हति। जीवब्रह्मणोरैक्यविषयकज्ञानं विधिप्रयुक्तमेव सेत्स्यति। अयं पक्षः प्रभाकरमतानुयायिनां मीमांसकानामेव। अतः शङ्कराचार्यात् पूर्वमपि मीमांसकैर्युक्त्याऽद्वैतवादस्य समर्थनं कृतम्। ब्रह्मसाक्षात्कारेऽपि प्रभाकरानुयायिभिर्विधिः स्वीकृतः। विधिविवेके मण्डनमिश्रेणोक्तम्—"प्रत्यस्तमिताखिलभेदप्रपञ्चात्मतत्त्वं कथमस्यगोचरः। तस्मात् प्रलीनसकलावच्छेदोल्लेखमद्वैततत्त्वावभासात्मकं ज्ञानमन्यदेव-

शब्दाद् विधीयते"(वि०वि०, पृ० २४६) । न्यायकणिकायामपि-"आत्मप्रतिपत्तिकर्तव्यता-परत्वमुपनिषदाम् । तिस्रः खल्विमाः प्रतिपत्तयः सम्भवन्ति---श्रुतमयी, चिन्तामयी, साक्षात्कारवती च" इति (न्या० क०, पृ० २७०) । कार्यार्थ एव वेदस्य प्रामाण्यमिति सिद्धं वस्तु वेदप्रमाणकं न भवति । "चोदनोऽर्थो धर्मः" इति सूत्रेण वेदार्थस्य चोदना-मात्रप्रमाणकत्वमिति । प्रवर्तकवचनमेव चोदना । अतः कार्यरूपार्थ एव वेदस्य प्रामाण्यम् । प्रतिपत्तिकर्तव्यतायामेव प्रामाण्यसद्भावेऽपि वेदान्तेन प्रतिपत्तव्यविषय-स्यापि सिद्धिर्भवति । उपनिषद्भागस्यापि तादृशब्रह्मविषयकप्रतिपत्तिकर्तव्यतायामेव प्रामाण्यम् । प्रतिपत्तिविधायकवाक्येन प्रतिपत्तिविषय-प्रतिपत्तव्यवस्तुनोऽपि सिद्धि-र्भवति ।

मीमांसकैरात्मविषयिणी प्रतिपत्तिस्त्रिभिः प्रकारैरुक्ता—श्रुतमयी, चिन्तामयी साक्षात्कारवती च । तिसृषु प्रतिपत्तिषु श्रुतिमय्यां प्रतिपत्तौ विधिर्न भवितुमर्हति; किन्तु साक्षात्कारवत्यां प्रतिपत्तावेव विधिः सम्भाव्यते । श्रुतावप्युक्तम्---"आत्मा वा अरे द्रष्टव्यः" इत्यादि । मीमांसकानामयमभिप्रायो यदात्मतत्त्वं कदापि वाक्यजन्यज्ञान-विषयो न भवितुमर्हति, वाक्यजन्यज्ञानमेव श्रुतमयी प्रतिपत्तिः । वाक्यघटकपदसमूहा-र्थस्य परस्परसंसर्ग एव वाक्यमात्रस्यार्थः, संसर्गश्च संसृज्यमानानेकार्थतन्त्रभूतः । अतो वाक्यार्थमात्रमेव नानार्थत्वदूषितम्, आत्मतत्त्वञ्च नानात्वदूषितं न भवितुमर्हति, यतः प्रत्यस्तमिताखिलभेदप्रपञ्च एवात्मतत्त्वम् । यस्मिन्नात्मतत्त्वे निखिलभेदप्रपञ्चः प्रत्यस्तमितो भवति, तादृशाखण्डैकात्मतत्त्वं कथमिव वाक्यार्थः स्यात् । वाक्यार्थो नानापदार्थसंसर्गात्मकः, अतः "प्रलीनसकलावच्छेदोल्लेखम्, अद्वैततत्त्वावभासात्मकं ज्ञानमन्यदेव शब्दाद् विधीयते" । ( वि० वि०, पृ० २७६ ) । शाब्दज्ञानाद्भिन्नं प्रत्य-क्षात्मकं ज्ञानमद्वैततत्त्वावभासात्मकमेवं समस्तावच्छेदोल्लेखरहितम् । प्रभाकरमता-नुयायिजनोक्तिभिर्निष्प्रपञ्चाद्वैतात्मकज्ञानस्वीकृतिः सुस्पष्टैव ।

प्रतिपत्तिविधिवादिनामेतन्मतखण्डन आचार्यमण्डनेनोक्तम्—"निष्प्रपञ्चात्म-तत्त्वावभासश्च फलमेव न ततोऽन्यदभीप्स्यते, मोक्ष इति चेत्, ततोऽव्यतिरेकात्, सप्रपञ्चात्मतत्त्वावभासो हि संसारः । निष्प्रपञ्चात्मतत्त्वावभासो हि मोक्षः स्वात्मनि स्थितिः" (वि० वि०, पृ० २७७) । अयमाशयः—यादृशात्मतत्त्वसाक्षात्कारे मीमांसकै-र्विधिः स्वीकृतः, स न सुसङ्गतः, यतस्तादृशात्मतत्त्वसाक्षात्कार एव फलम्, फलांशे च विधिर्न भवति । यतः फलसाधनांश एव विधिर्भवति, निष्प्रपञ्चात्मतत्त्वावभास एव फलम् । एतत्फलानन्तरमन्यद् वस्त्वभीप्सितं न भवितुमर्हति । निष्प्रपञ्चात्मतत्त्वाव-भासस्य फलं मोक्ष इत्यपि न युक्तियुक्तम्, यतो निष्प्रपञ्चात्मतत्त्वावभास एव मोक्षः, स चावभासस्वरूपः, अवभासश्च न फलम् । सप्रपञ्चात्मतत्त्वावभास एव संसारः । निष्प्रपञ्चात्मतत्त्वावभासः स्वात्मनि स्थितिः । अनेन प्रकारेण प्रभाकरसिद्धान्तं निरस्य मण्डनमिश्रेणोक्तम्—"यदि कार्यरूप एव वेदार्थः, कथन्तर्हि मन्त्रार्थवादाः सोपनिषत्काः,

यस्माद् भूतादिकमर्थं चोदनैव गमयति, कथम् ? कार्यमर्थमवगमयन्ती भूतादिकमपि गमयति" ( वि० वि०, पृ० २७९ )।

न्यायकणिकायां तु—"चोदना हीति भाष्यग्रन्थस्य निबन्धनकृतो व्याख्यानमसमञ्जसम्" इत्याख्यातम्।

अद्वैतसिद्धान्तः प्रभाकरेण नाविष्कृतः; अपि तु ब्रह्मनन्दिप्रभृतिभिः पूर्वाचार्यैराविष्कृतः, अत एव गौडब्रह्मानन्देनोक्तम्—प्रभाकरभट्टयोस्तु वेदान्तदर्शने विद्वेषाभावः।

भाट्टमतसमालोचनयापि कुमारिलभट्टोऽद्वैताविरोधी प्रतीयते। तथा हि—

इत्याह नास्तिक्यनिराकरिष्णु-
रात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः
प्रयाति वेदान्तनिषेवणेन ॥

( श्लोकवार्त्तिके, तर्क० का० १४८ )

अत एव सिद्धान्तबिन्दावुक्तम्—"इति तर्कवचनीयभट्टकारिकया वेदान्तदर्शनपुरस्कारात्" ( सि० बि०, पृ० ३५४ )।

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" ( जै० सू० १।१।५ ) सूत्रमिदं पूर्वोत्तरमीमांसायाः प्रमाणनिरूपणस्योपजीव्यम्। उत्तरमीमांसायां प्रमाणलक्षणसम्बन्धे किमपि सूत्रं नोक्तवान्। तथा चाज्ञातार्थज्ञापकः शब्द एव प्रमाणम्। उभयमीमांसायामज्ञातज्ञापकस्य प्रमाणत्वादेव बादरायणस्य नामकीर्तनं कृतम्। 'बादरायणस्य' व्याख्यायां शाबरभाष्य उक्तम्—"बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुं नात्मीयं मतं पर्यवसितुम्" ( मी० शा० भा० १।१।५ )। भगवन्तं बादरायणं प्रति श्रद्धातिशयं द्योतयितुमेतदुक्तम्। अतो न केवलं जैमिनेर्मतमेतत्। भगवतो बादरायणस्य मतप्रदर्शनप्रसङ्गेऽद्वैतवेदान्तिनो वदन्ति—ब्रह्मचैतन्यमेवाज्ञातमज्ञानावृतम्, जडवस्त्वज्ञातं न भवितुमर्हति। अतोऽज्ञातब्रह्मज्ञापनं शब्द एव प्रमाणम्। तत्राप्यज्ञातशुद्धनिरवच्छिन्नब्रह्मज्ञापकशब्द एव मुख्यं प्रमाणम्। एवं सावच्छिन्नज्ञातब्रह्मज्ञापकशब्दो गौणरूपेण प्रमाणम्। घटोऽज्ञात इति कथनेन घटावच्छिन्नं चैतन्यमज्ञातमिति गम्यते। घटादिजडवस्तु खल्वज्ञानविषयताया अवच्छेदकं भवति, अज्ञानस्य विषयो न भवति, अज्ञानविषयश्चैतन्यमेव भवति। शुद्धचैतन्यमेव चैताभावोपलक्षितं चैतन्यम्, तथा चैतज्जैमिनिसूत्रमप्यद्वैत एव पर्यवसितं भवति। बादरायणाभिप्रेतमिदं प्रमाणलक्षणमिति जैमिनिना स्वयमेवोक्तम्।

विधिविवेक उक्तम्—सिद्धवस्तुनः प्रतिपादनं प्रमाणवाक्यस्य स्वभाव एव नास्ति। 'धनसमृद्धोऽयं देशः' इत्यादि सिद्धवस्तुप्रतिपादकं लौकिकवाक्यमपि विधिपर्यवसायि, यतः 'त्वं जानीहि' इति विधिवाक्य एव पूर्ववाक्यं पर्यवसितम्।

प्रभाकरमिश्राशयाभिव्यक्तिदृष्ट्या वाचस्पतिमिश्रो वदति। कस्तावत्प्रतिपत्तिशब्दार्थः? उपनिषद्वाक्यजन्यब्रह्मविषयकशाब्दबोधः, ब्रह्मविषयकध्यानं चिन्ता वा, ब्रह्मसाक्षात्कारो वा। ब्रह्मप्रतिपादकवाक्याद् वाक्यार्थबोधे विधेरपेक्षा नास्ति, वाक्यार्थबोधे यदि विधेरपेक्षा स्यात्, तदा कर्मविधिरपि स्वार्थबोधार्थमन्यविधेरपेक्षां कुर्यात्। एवमेव तत्राप्यन्यविधेरित्यनवस्था स्यात्। विधिवाक्येनावगत्यनन्तरं विधेयवस्तुनि प्रवृत्तिः स्यात्, एतदेव विधेः प्रयोजनम्, ब्रह्मविषयकशाब्दबोधे कुत्र प्रवृत्तिर्भवेत्? अतः शाब्दबोधे विधिस्वीकारे विधेः प्रयोजनमेव न स्यादिति श्रुतमय्यां प्रतिपत्तौ विधिर्न सम्भाव्यते।

न्यायकणिकायामपि वेदान्तवाक्यं यदि ब्रह्मप्रतिपत्तिविधायकं स्यात्, तदा ब्रह्मस्वरूपे वेदान्तवाक्यं प्रमाणमेव न स्यात्, ब्रह्मप्रतिपत्तिविषयकविधिः प्रतिपत्तिविषयस्य ब्रह्मस्वरूपस्यापेक्षां कुर्यादिति ब्रह्मस्वरूपे वेदान्तवाक्यं प्रमाणं भवेत्, परमेतन्न समीचीनम्, यतः प्रतिपत्तिः समारोपितविषयेऽपि भवितुमर्हति। अतो वेदान्तवाक्यस्य ब्रह्मपरत्वं न सिद्ध्यतीति वेदान्तस्य ब्रह्मविद्यात्वमेवासम्भवि।

"अपि च प्रतिपत्तिविधिपरत्वे वेदान्तानां ब्रह्मस्वरूपसत्तायामप्रामाण्यप्रसङ्गः.... प्रतिपत्तिविषयो हि विधिः प्रतिपत्तिविषयमात्मतत्त्वमपेक्षते। तथा च तदात्मशब्दः प्रमाणमिति चेत्, न, आत्मतत्त्वमन्तरेण समारोपेणापि प्रतिपत्तेरुपपत्तेः। एवञ्च तत्परत्वाभावाद् वेदान्तानां ब्रह्मविद्यात्वं प्रसिद्धं बाध्येत" (न्या० क० १९३)।

आचार्यमण्डनेनाप्युक्तं यद् वेदान्तवाक्यं यदि ब्रह्मप्रतिपत्तौ विधिप्रतिपादकं स्यात्, तदा तादृशवाक्याद् ब्रह्मप्रतिपत्त्यर्थमनुष्ठानस्यावगतिर्भवेत्। यतो विधिवाक्यात् क्रियाया बोधो भवति। अतस्तादृशवाक्यादात्मतत्त्वस्य सिद्धिर्न स्यादित्यात्मतत्त्वस्य ब्रह्मतत्त्वस्य वा प्रतिपादकवेदान्तवाक्ये विधिसत्त्वेऽपि तदविवक्षितमेव स्यात्[1]।

यद्युच्यते ब्रह्मप्रतिपादकवाक्यश्रवण एव ब्रह्मविषयकशाब्दज्ञानमुत्पद्यते। एतस्मिन् शाब्दज्ञाने विधेरावश्यकताया अभावेऽपि ब्रह्मविषयकशाब्दज्ञानाद् भिन्नविषयकं साक्षात्कारात्मकं ज्ञानं ब्रह्मगोचरं प्रत्यक्षज्ञानं विधातुं शक्यते। विशेषतो ब्रह्म

१. वि० वि०, पृ० १९४।

शाब्दज्ञानस्य विषयो न भवितुमर्हति, यतो वाक्यार्थज्ञानमेव शाब्दज्ञानं पदार्थसंसर्गश्च वाक्यार्थः संसर्गज्ञानं संसृष्टानेकपदार्थविषयकं भवति। अतो निरस्तसमस्तभेदप्रपञ्चात्मकं ब्रह्मतत्त्वं वाक्यार्थज्ञानस्य विषयः कथमिव स्यात् ? तस्माददद्वैततत्त्वावभासज्ञानं वाक्यजन्यज्ञानाद्द भिन्नम्, तत्रैव च विधिः[1] ।

प्रभाकरस्यैतत्सिद्धान्तखण्डनप्रसङ्ग आचार्यो मण्डनः कथयति—अद्वैततत्त्वावभासरूपः साक्षात्कारो विधेयो न भवितुमर्हति, अद्वैततत्त्वसाक्षात्कार एव फलम् । फलं न कदाचिदपि विधेयं भवति। फलातिरिक्तं किमप्यभीष्टं न जायते, तथा चाभिलषितान्यवस्तूनामभावात् फले विधिर्न भवति। "वार्तमेतत्, न खलु फलांशो विधिगोचरः। निष्प्रपञ्चात्मतत्त्वावभासश्च फलमेव, न ततोऽन्यदभीप्सते, मोक्ष इति चेत्, ततोऽन्यतिरेकात्" ( वि० वि० १९७ )। मोक्षस्य निष्प्रपञ्चात्मतत्त्वावभासरूपत्वात् स्वात्मनि स्थितिरेव मोक्ष इति।

सकलभेदप्रपञ्चरहितस्य ब्रह्मणः केनापि रूपेण शाब्दज्ञानविषयत्वाभावात् तादृशब्रह्मविषयकज्ञाने विधिर्न सम्भाव्यते। निर्विषयकज्ञाननिरूपणं न सम्भवति। सिद्धविषय एव ज्ञानस्य निरूपको भवति, नासिद्धविषयः। वाक्यस्थले च ज्ञाननिरूपकं प्रपञ्चरहितं ब्रह्म। एतस्य ब्रह्मणः सिद्धिः शाब्दप्रमाणातिरिक्तप्रमाणेन न भवितुमर्हति। ब्रह्मणः सिद्धिं विना ब्रह्मविषयकज्ञानस्यापि सिद्धिर्न सम्भाव्यतेऽतो ब्रह्मज्ञाने विधिरसम्भव एव। शाब्दज्ञानविषयाभावेऽपि भेदप्रपञ्चविलयेन शाब्दज्ञानस्य विषयो भविष्यति, एतदपि न समीचीनम्, तथा सति ब्रह्म शाब्दज्ञानाविषयो न भवेत्, 'आत्मा ज्ञातव्यः', 'आत्मानमुपासीत' इत्याद्युपनिषद्वाक्यं यदि ब्रह्मप्रतिपत्तिकर्तव्यतातात्पर्यकं स्यात्, तदेदृशं ब्रह्म प्रतिपत्तव्यमित्यत्र ब्रह्मण ईदृशत्वमुपनिषद्वाक्यस्यार्थो न भवेत्, वाक्यस्य यत्र तात्पर्यं स एव वाक्यार्थः, वचनस्य प्रतिपत्तिकर्तव्यतायां वाक्यस्य तात्पर्यमिति ब्रह्मण ईदृशत्वे वाक्यस्य तात्पर्यं नास्ति। अतो वाक्यतात्पर्याविषयब्रह्मस्वरूपं वाक्येन न सिद्ध्येत्, प्रतिपतिविधेः कर्तव्यतापरत्वेऽपि प्रत्येतव्यविषयपरत्वं तस्य नास्ति।

"प्रतिपत्तिकर्तव्यतैव प्रतिपत्तिरिति तद्विषयस्य ब्रह्मण आक्षेप इति प्रत्येतव्यब्रह्मतत्त्वं सेत्स्यति" प्रभाकरस्यैतत् कथनमपि न समीचीनम्। प्रतिपत्तिकर्तव्यतया प्रत्येतव्यस्याक्षेपेऽपि तथात्वस्याक्षेपो न सम्भवति। यदि कार्यरूप एव वेदार्थः, कथं तर्हि मन्त्रार्थवादाः सोपनिषत्का भूतार्थाभिधायिनः। यदि भूतादिरर्थश्चोदनायाः, न स तर्हि कार्यरूपो वेदार्थः, न चानपेक्षेति कार्यमवगमयन्ती भूतादिकमपि गमयति। द्विविधो हि शब्दः कार्याभिधायी लिङादिः, भूताद्यभिधायी च लङादिः, तत्र लिङादेस्तावत् कार्याभिधायित्वादेव तत्परत्वम्। लङादयस्तु भूतादिकार्यपरतया तदन्वितमेवा-

---

१. वि० वि० १९७।

भिदधति। ततश्च तेषामपि कार्ये तात्पर्यात् कार्यार्थत्वं सिद्धम्, तथा च भूताद्यभिधायिनामपि निरपेक्षत्वम्, भूताद्यभिधायकलङादेरनपेक्षत्वात्। यदि लङादिकार्येण सहासम्बद्धशुद्धभूतवस्तुमात्रस्य प्रतिपादनं स्यात्, तदा प्रमाणान्तरसिद्धभूतवस्तुनः प्रतिपादकत्वात् सापेक्षत्वं स्यात्, तदा निरपेक्षत्वरूपं प्रमाणं स्यात्। भवतु नाम, प्रपञ्चितमेतत्सर्वं प्रकरणपञ्चिकायां शालिकनाथादिभिः।

"आत्मैवंरूपो ज्ञातव्यः" इत्येतद्वाक्येनैवंरूपताऽवश्यमेव सिद्ध्यतीत्यत्र नास्ति सन्देहः। अतथावस्तुन्यतथाभावस्वीकर्तॄणां मते ज्ञानविधिना ज्ञेयवस्तुनः मापि भवतु; किन्तु ज्ञानं कदापि विषयव्यभिचारि न भवितुमर्हतीति ज्ञानविधिवाक्यस्य ज्ञेयस्वरूपे तात्पर्याभावेऽपि ज्ञानमहिम्नैव ज्ञेयवस्तुस्वरूपस्य सिद्धिः स्यात्। यद्धि वस्तु यद्रूपं नास्ति तत् तद्रूपेण कदापि ज्ञानस्य विषयो न स्यात्, विषयव्यतिरेकेऽपि ज्ञानं स्यात्, तदा लोकव्यवहार एवोच्छिन्नः स्यात्, ज्ञाने वस्तुनो भासमानत्वेऽपि ज्ञानस्याऽऽलम्बनमन्यद् भवति। यथा ज्ञाने रजतस्य भासमानत्वेऽपि तज्ज्ञानस्यालम्बनं शुक्तिरेवेति प्रतीतिविरुद्धम्, यद्धि ज्ञाने भासते तदेव तज्ज्ञानस्य विषयः। विषयस्य व्यवहारार्थमेव विषयज्ञानस्यावश्यकतेति रूपेणाऽख्यातिवादं प्रदर्श्य खण्डनं कृतम्। आचार्यमण्डनोऽख्यातिवादं खण्डयित्वाऽन्यथाख्यातिवादं समर्थितवान्। अनिर्वचनीयख्यातिवादस्तु नैव समर्थितः।

पूर्वोक्तविश्लेषणेनाद्वैतब्रह्मसिद्ध्यर्थमुत्तरमीमांसाया आरम्भो निष्प्रयोजन इति। एतदपि सुस्पष्टं यद् यस्याद्वैतसिद्धान्तस्य समर्थनमाचार्यशङ्करप्रभृतिभिः कृतं तत् स्मरणातीतकालादेव गौडपाद-द्रविडाचार्य-ब्रह्मनन्दि-सुन्दरपाण्ड्यादिभिर्वेदान्ताचार्यैरुत्तरमीमांसासाहाय्येनाद्वैतब्रह्मसिद्धिः कृता। पूर्वमीमांसकैरपि भिन्नरूपेणाद्वैतवाद एव समर्थितः। प्रभाकरोऽपि पूर्वसिद्धान्तस्यैव समर्थको न त्वपूर्वोद्भावकः।

प्रदर्शितमीमांसकमतालोचनायामेतत् तु निश्चप्रचं यद् विपरीतार्थविषयकज्ञानसिद्ध्यधीन एवाद्वैतवेदान्तिनां जयो नान्यथा। भ्रमज्ञानसिद्धौ विधिनिरपेक्षवेदान्तवाक्येनैव ब्रह्मणः सिद्धिः करणीया। सकलस्य ज्ञानस्य प्रमारूपत्व एव जीवब्रह्मणोरैक्यं प्रतिपत्तिविधिना सम्भाव्यते। बादरायणतन्त्रारम्भो भ्रमज्ञानसिद्धावेव। अत एव मण्डनमिश्रेणाप्यख्यातिवादनिरसनपूर्वकमन्यथाख्यातिवादसमर्थनं कृतम्, भ्रमज्ञानञ्च संस्थापितम्। यथार्थज्ञानेन संवादिप्रवृत्तिर्जायते, विसंवादिप्रवृत्तिरक्षार्थं सर्वैरेवायथार्थज्ञानं स्वीकृतम्। न्यायमतसिद्धान्यथाख्यातिसमर्थनार्थं मण्डनस्य प्रवृत्तिर्नास्ति; अपि तु भ्रमज्ञानसमर्थन एव तथा प्रवृत्तिः, न्यायमतसिद्धान्यथाख्यात्या सह जीवब्रह्मैक्यस्य सम्बन्धो नास्ति। अन्यथाख्यातिश्चानिर्वचनीयख्यातावेव पर्यवसानं लभते। अन्यथा मण्डनमिश्रस्य द्वैतवादित्वं स्यात्। ज्ञानस्य समारोपेणापि सिद्धिर्जायते। अतथावस्त्वपि

तथात्वरूपेण प्रतीतेर्विषयो भवति, अतो ज्ञाने विधिर्न सम्भाव्यत इत्यद्वैतवेदान्तिनां मतम्। मीमांसकास्त्वतथावस्तुनस्तथात्वरूपेण प्रतीतिविषयत्वं न स्वीकुर्वन्ति, ते हि कथयन्ति—अन्यवस्तुनोऽन्यरूपेण ग्रहणं बुद्धिर्नैव कर्तुं शक्यते, यस्मिन् वस्तुनि यो धर्मो नास्ति, तद्वस्तु तद्धर्मप्रकारतया बुद्धिविषयो न भवितुमर्हति। अन्यवस्तुनोऽन्यथारूपेण ग्रहणमेव भ्रान्तिः। इयं च भ्रान्तिर्न सम्भाव्यते, यतो ज्ञाने यद्धि वस्तु भासते, तदेव वस्तु तज्ज्ञानस्य विषयो भवति। यद्धि वस्तु यस्मिन् ज्ञाने न भासते, तद्वस्तु तज्ज्ञानस्य विषयो न भवितुमर्हति, ज्ञानेऽभासमानवस्तुज्ञानविषयो भवतीत्यन्तविरुद्धम्।

ये शुक्तौ रजतभ्रान्तिं स्वीकुर्वन्ति, ते भ्रान्तिज्ञाने रजतमपि भासन्त इति विषयश्च शुक्तिरिति प्रतीतिविरुद्धम्। प्रतीतिविरोधाद् भ्रमज्ञानस्य सिद्धिर्न सम्भाव्यते। भ्रमज्ञानस्वीकार एव ज्ञानमन्यवस्तुनोऽन्यथारूपेण ग्रहणं कुर्यात्। यस्मिन् यो धर्मो नास्ति, तत्र तस्य धर्मस्य ग्रहणे तु ज्ञानमात्रे लोकस्यानाश्वासो भवेत्, यतो विनापि विषयं यदि ज्ञानं स्यात्, तदा कस्मिन्नपि ज्ञाने लोकस्याश्वासो न स्यात्। तथा च तद्विषयं दृष्ट्वापि लोकानां निष्कम्पप्रवृत्तिर्न स्यादिति लोकव्यवहार एवोच्छिद्येत। ज्ञानस्य विषयव्यभिचारित्वाभाव एव सकलज्ञाने लोकानामाश्वासो भवेत्। अतः सकलं ज्ञानं समीचीनमिति स्वीकर्तव्यम्। अत एव तैरुक्तम्—

अहो बत महान् एष प्रमादो धीमतामपि।
ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धनः॥

ज्ञानं यदि विषयानुकारि नोदेति तदा ज्ञानं निर्विषयकं निरालम्बनं स्यात्, निरालम्बञ्च ज्ञानं ग्रहणायोग्यम्, शुक्तिरूपस्यानुकरणं विना यज्ज्ञानमुत्पद्यते, तज्ज्ञानं शुक्तिविषयकं नास्ति। एवं तस्य ज्ञानस्यालम्बनमपि शुक्तिर्नास्ति। इन्द्रियसम्बन्धः शुक्त्या सह नास्ति, परं ज्ञानं शुक्तिविषयकं नास्ति, अतो रजतं प्रत्यक्षज्ञानस्य विषयो न भवितुमर्हति। येन सहेन्द्रियस्य सम्बन्धः, स प्रत्यक्षज्ञानस्य विषयो नाभूत्, येन सहेन्द्रियस्य सम्बन्धो नास्ति, स एव प्रत्यक्षज्ञानस्य विषयो जात इत्येतन्न सम्भाव्यते।

ज्ञानस्य भ्रमत्वस्वीकर्तृभिरुच्यते, इन्द्रियसन्निकृष्टशुक्तेर्ज्ञानेऽभासमानत्वेऽपि शुक्तौ यो हि रजतभ्रमः, तत्र शुक्तिरालम्बनं भवितुमर्हति। यत इन्द्रियसन्निकृष्टशुक्ती रजतभ्रमजनिकेति ज्ञानजनकत्वादेव शुक्तिर्भ्रमज्ञानालम्बनभूता। तथा च भ्रमज्ञानं न निरालम्बनम्। मीमांसकैरुच्यते—एतदपि न समीचीनम्। ज्ञानहेतुत्वादेव यदि ज्ञानेऽभासमानं वस्तु ज्ञानस्यालम्बनं स्यात्, तदा चक्षुरादीन्द्रियस्यापि ज्ञानजनकत्वाज्ज्ञानस्यालम्बनत्वं स्यात्। यद्धि ज्ञानवेद्यं यच्च यस्मिन्ज्ञाने भासते, तदेव तज्ज्ञानस्यालम्बनं भवति। यद्धि यस्य ज्ञानस्य नैव वेद्यं तत्तज्ज्ञानस्यालम्बनं भवति। यद्धीन्द्रियसन्निकृष्टन्तदेव तज्ज्ञानवेद्यमित्यालम्बनं भवति। शुक्तिरभासमानेति तज्ज्ञानस्य नालम्बनं रजतञ्चा-

सन्निकृष्टमिति तत्प्रत्यक्षज्ञानस्यालम्बनं भवितुं नार्हति, अतो भ्रमवादिनां मते भ्रान्तिज्ञानं निरालम्बनमेव स्यात्। बौद्धानां मते ज्ञानमात्रमेव निरालम्बनमर्थाद् बाह्यानालम्बनं भवति। भ्रमज्ञानस्य निरालम्बनत्वे भ्रमज्ञानदृष्टान्तेनैव तन्मते ज्ञानस्य निरालम्बनत्वानुमानं स्यात्। विषयव्यवहारार्थमेव ज्ञानस्यापेक्षा। ज्ञानस्य निरालम्बनत्वे ज्ञानं कस्यापि व्यवहारस्य जनकं न स्यात्।

भ्रमवादिनामियं शङ्का—यदि शुक्ती रजतरूपेण नैव ज्ञानस्य विषयः, शुक्ती रजतरूपेण यदि न भासते, तदा लोके यच्छुक्तौ रजतज्ञानं तत् किम् ?

शुक्तिसन्निकर्षदशायां यद्रजतज्ञानमुत्पद्यते तद्रजतस्मृतिः। रजतस्य चाक्षुषप्रत्यक्षता नास्ति, अत्र रजतस्मृतेः किं कारणम् ? शुक्त्या सहेन्द्रियसन्निकर्षो न रजतस्मृतेः कारणम्, शुक्त्या सहेन्द्रियसन्निकर्षे सति शुक्लभास्वरत्वादिरूपेण शुक्तेर्ग्रहणं भवति; किन्तु दोषवशाच्छुक्तित्वरूपेण ग्रहणं न भवति, शुक्लभास्वरत्वादिरूपं शुक्ते रजतस्य च साधारणं रूपम्, तथा च शुक्ते रजतस्य च साधारणरूपेण शुक्तेर्ग्रहणं भवति। रजतसदृशरूपेण शुक्तेर्दर्शने सति द्रष्टृ रजतसंस्कारस्योद्बोधो भवति, उद्बुद्धरजतसंस्काराच्च रजतस्मृतिः। **"सदृशादृष्टचिन्ताद्या स्मृतिबीजस्य बोधकात"**। अत्रेयं जिज्ञासा यदेतस्य ज्ञानस्य भ्रान्तित्वं कथं सिद्धयति ? यतः शुक्तिसन्निकर्षवशाच्छुक्तिरजतसाधारणशुक्लभास्वरत्वादिरूपेण सन्निहितशुक्तौ 'इदम्' इति प्रत्यक्षानुभव उत्पद्यते, सदृशदर्शनाच्च रजतस्मृतिरिति ज्ञानद्वयमेव यथार्थमित्येतस्य ज्ञानस्य भ्रान्तित्वं कथं सिद्धयति ?

अख्यातिवादिनः कथयन्ति—शुक्लभास्वरत्वादिरूपेण पुरोऽवस्थितशुक्तिका 'इदम्'-रूपेण प्रत्यक्षविषयो भवति, प्रत्यक्षे शुक्तिकायां रजतभेदको विशेषधर्मः शुक्तित्वं तच्च दोषवशान्न गृह्यते। रजतसाधारणधर्मशुक्लभास्वरत्वादिकं शुक्तिकायां गृहीतम्, सदृशदर्शनजन्या रजतस्मृतिरपि तत्त्वोल्लेखशून्योत्पद्यते। 'तद्रजतम्' इत्येव स्मृत्याकारः तत्त्वोल्लेखशून्यं स्मृतिविषयभूतं रजतं प्रत्यक्षगृहीतशुक्तेर्दोषवशतो भिन्नरूपेण न गृह्यते, भिन्नदेशकालवृत्तिशुक्त्यादिकं परं भिन्नदेशीयत्वेन भिन्नकालीनत्वेन गृहीतं न भवतीत्युभयोर्विवेकग्रहणप्रयुक्ता शुक्तौ रजतार्थिनो रजतबुद्ध्या सह रजतप्रवृत्तेर्विसंवादो भवति। एतादृशविसंवादिप्रवृत्तिजनकत्वादेवेदंग्रहणे रजतस्मृतौ भ्रान्तित्वव्यवहारो लोकानाम्। अगृहीतविवेकज्ञानद्वयं विसंवादिप्रवृत्तेर्जनकं भवतीत्युक्तज्ञानद्वयस्य समीचीनत्वेऽपि केवलविसंवादिप्रवृत्तिजनकत्वादेव यथार्थज्ञानद्वयस्य भ्रमत्वं ग्रहणस्मरणात्मकमेतज्ज्ञानद्वयमनेन रूपेणोत्पद्यते, यथा गृह्यमाणस्मर्यमाणवस्तुद्वयस्य परस्परभेदकधर्मद्वयं ग्रहणस्य स्मरणस्य च विषयो न भवति। साधारणधर्मग्रहणादेव वस्तुद्वयस्याभेदग्रहो भवति। भेदाग्रहणमात्रमेव भवति, परं विवेकरहितपुरुषाणां भेदाग्रहणेऽभेदग्रहणस्याभिमानो जायते। वस्तुतो वस्तुद्वयस्याभेदो न भवितुमर्हति।

अत्रेयं जिज्ञासा जागर्ति यन्नास्ति तस्य ग्रहणं कथमिव भवति? दोषवशाद् भेदाग्रहणमात्रं भिन्नवस्तुद्वयस्याभेदोऽलीकः, अलीकस्य प्रत्यक्षता न सम्भाव्यते। वस्तुतोऽलीकस्य ज्ञानमेव न सम्भाव्यते, अत एवाद्वैतवेदान्तेऽलीकवस्तुविषयकविकल्पवृत्तिः स्वीकृता। शब्दजन्यैवेयं वृत्तिः, भेदस्याग्रहणं दोषवशतः सम्भाव्यते, यथाऽल्पव्यवहित-वृक्षद्वयस्य दूराद् दर्शने सति द्रष्टा वृक्षद्वयमध्यस्थदेशं न गृह्णातीति संश्लिष्टाभिमानमेव करोति। अत्रासंश्लेषस्य ग्रहणमात्रम्। विवेकशून्यो जनः संश्लिष्टग्रहणाभिमानं करोति, आलोकाग्रहणे तमोदर्शनाभिमानस्येव, आलोकादर्शनव्यतिरिक्तं तमो नास्ति ( विधि-वि० पृ०, ७०-७१ )।

पूर्वोक्तपूर्वपक्षसमाधानेऽद्वैतिनः संवदन्ति—अन्यवस्तुनोऽन्यरूपेण प्रतीतिर्न सम्भाव्यते—एतदसङ्गतमेव। यदि चक्षुःसंयुक्तशुक्तिकाखण्डस्य रजतरूपेणाप्रतीतावथवा देशान्तरगतस्य रजतस्य पुरोवर्तित्वरूपेणाप्रतीतौ शुक्तिकाखण्डे रजतार्थिनः प्रवृत्तिर्न सम्भाव्यते। रजतं वस्तु 'इदंरूपेण' 'इदं'–वस्तु च रजतरूपेण रजतभ्रान्तौ भासते। यथा चाचार्यशङ्करोऽन्यान्याध्यासं स्वीकरोति, तथैवाचार्यमण्डनोऽपि। अत एव शुक्तिकाखण्डं रजतरूपेण। एवमेव देशान्तरीयं रजतमपि सन्निहितयुक्तिरूपेण प्रतीयते। एकतराध्यासं परित्यज्यान्योऽन्याध्यासस्वीकारस्याभिप्रायस्तु यदि शुक्तिकाखण्डं रजतरूपेण प्रतीतं न स्यात्, तदा रजतार्थिनस्तत्र प्रवृत्तिर्न स्यात्। यद्धि वस्तु रजतरूपेण न प्रतीयते, तत्र रजतार्थिनः प्रवृत्तिर्न भवति, यथा मृत्पिण्डादौ रजतार्थिनः प्रवृत्तिर्न जायते। स्मर्य्यमाणरजते रजतार्थिनः प्रवृत्तिरिति वक्तुं न शक्यते, यतः स्मर्य्यमाणं रजतं पुरोवर्तिनि देशे नास्ति; किन्तु रजतार्थिनः पुरोवर्तिन्येव देशे प्रवृत्तिर्जायते।

यच्चुच्यते स्मर्य्यमाणं रजतं पुरोवर्तिदेशे न भासते; किन्तु दोषवशान्मनस उपघात-निबन्धना रजतस्मृतिः, आकारस्तु 'तद्रजतम्' एतादृशतत्तोल्लेखरहितं 'रजतम्' एतन्मात्रमेव स्मरणम्। स्मर्य्यमाणं रजतं पूर्वदेशसम्बद्धं न भासते; अपि तूक्तस्मृतौ रजतमात्रमेव प्रतीयते रजतस्यासन्निधिर्न प्रतीयतेऽत एव रजतार्थिनः शुक्तिखण्डे प्रवृत्तिः।

रजतस्यासान्निध्याप्रतीतिप्रयुक्तैव रजतार्थिन इदमास्पदे प्रवृत्तिस्वीकारेऽन्यत्रापि रजतार्थिनः प्रवृत्तिः स्यात्, राजतमसान्निध्यं त्वन्यत्रापि वर्तत एव परं शुक्तिखण्ड एव रजतार्थिनो नियतप्रवृत्तिर्भवति। रजतत्वसंसर्गाज्ञाननिबन्धना प्रवृत्तिरिति स्वीकारे त्वन्यवस्तुन्यपि प्रवृत्ती रजतासंसर्गाज्ञानस्य तत्रापि सद्भवात्। अख्यातिवादिनो रजतत्वरूपेण शुक्तिकाखण्डस्य ज्ञानं नाङ्गीकुर्वन्ति।

यदि शुक्तिकाखण्डेन सह स्मर्य्यमाणरजतस्य भेदाग्रहनिबन्धना रजतार्थिनः शुक्तिखण्डे प्रवृत्तिः, अदृष्टमृत्खण्डे चैतादृशी सम्भावना नास्ति। दृष्टस्मृतशुक्ति-

रजतयोर्भेदाग्रह एव रजतार्थिनः प्रवृत्तिकारणम्। अदृष्टमृत्पिण्डस्य स्मृतरजतस्य च भेदाग्रहो रजतार्थिप्रवृत्तिकारणं नास्ति।

अत्रेदं चिन्तनीयं यद् दृष्टशुक्तिखण्डेन सह स्मर्य्यमाणरजतस्य भेदो यथा न गृह्यते, तथैवादृष्टमृत्पिण्डेऽपि रजतभेदो न गृह्यतेऽतोऽदृष्टमृत्पिण्डे रजतार्थिप्रवृत्तिर्दुर्निवारैव। मृत्पिण्डस्यादृष्टत्वं शुक्तिखण्डस्य दृष्टत्वमिति वैलक्षण्यमात्रमेव प्रवृत्तेरप्रवृत्तेश्च कारणं न भवितुमर्हति। ज्ञानविषय एव प्रवृत्तिरिति ज्ञानविषये शुक्तिखण्डे प्रवृत्तिर्न च ज्ञानाविषये मृत्पिण्डे। परं पुरोवर्तिरजतमपि विषयो नास्ति। तत्र कथं प्रवृत्तिर्भवति, शुक्तिर्विषयो भवति; किन्तु शुक्तिस्तु न रजतार्थिनः प्रवृत्तिविषया, अतोऽकामेनाप्यविषये प्रवृत्तिरख्यातिवादिभिः स्वीकरणीया। अख्यातिवादिभिरुच्यते—दृश्यमानेन सह विवेकाग्रह एव कारणं प्रवृत्तेरदृश्यमानेन सह विवेकाग्रहः प्रवृत्तेः कारणमेव नास्ति।

दृश्यमानेन सह भेदाग्रहोऽदृश्यमानेन सह भेदाग्रह एतदुभयमपि स्वरूपभेदस्वरूपं न, विवेकाग्रहो विवेकग्रहणप्रागभावस्वरूपः। उभयत्रापि विवेकाग्रहणमस्त्येव, यतो ह्यख्यातिवादिमतेऽभावपदार्थ एव नास्तीत्यभावकृतं वैलक्षण्यं तन्मते न सम्भाव्यते।

शुक्तिखण्डस्य दृष्टत्वे शुक्तिखण्डेन सहेन्द्रियस्य योगोऽस्ति, शुक्तिखण्डस्य दर्शनमप्यस्ति। अदृष्टवस्तुना सह नैवेन्द्रिययोगो न च तद्दर्शनम्। अतो दृष्टविवेकाग्रहोऽदृष्टविवेकाग्रहश्च समान एवेति न वक्तुं शक्यते।

विवेकाग्रह इन्द्रिययोगस्य दर्शनस्य च क्वोपयोगिता ? दृष्टवस्तुना सह विवेकाग्रहेऽपीन्द्रिययोगस्य दर्शनस्य कोऽप्युपयोगो नास्ति, अग्रहणं हि ग्रहणस्य प्रागभावमात्रम्। तत्रेन्द्रिययोगस्य दर्शनस्य च कोऽप्युपयोगो न विद्यते। इन्द्रिययोगस्य दर्शनस्य चोपयोगिता शुक्तौ रजतारोपे रजते शुक्त्यारोपे वा, यतः शुक्तौ रजतज्ञानं चाक्षुषभ्रमः, चाक्षुषभ्रमे चक्षुःसंयोगस्यावश्यकता विद्यते, यतः शुक्तिश्चक्षुःसंयुक्ता स्यादेवं सामान्यरूपेणार्थादिदंरूपेण तद्दर्शनं स्यात्, तदैव तत्र रजतारोपः। अन्यथा तदारोपो नैव सम्भाव्यते। अत इन्द्रियसंसर्गः दर्शनञ्च रजतसमारोप आवश्यकं न त्वग्रहणे।

मीमांसकसिद्धान्तो विस्तरेण ब्रह्मसिद्धौ विधिविवेके परिबृंहितः। तस्मिन् समये मीमांसकमतं प्रबलं प्रचलितमासीत्। अन्यथा ब्रह्मकाण्डविचारे विरोधोऽप्यपरिहार्यः। वेदान्तप्राचीनग्रन्थेषु मीमांसकानां विस्तृतो विचार उपनिबद्धः। विभिन्नमीमांसकप्रस्थानानां निर्देशो ब्रह्मसिद्धिग्रन्थे कृतः। वस्तुतोऽख्यातिवाद एव बादरायणसिद्धान्तस्य मूलोच्छेदकः। अख्यातिवादनिरसनपूर्वकमेव बादरायणीयसूत्रस्य शाङ्करभाष्यस्य च प्रवृत्तिः। भ्रमज्ञानस्य समर्थनं विना बादरायणीयसूत्रस्याभ्युत्थानमेव न सम्भाव्यते। भ्रमज्ञानमेव विपरीतख्यातिरन्यथाख्यातिर्वा भ्रमज्ञानमात्रमेवानिर्वचनीयख्यातौ पर्यवसन्नम्।

वटे यक्षस्तिष्ठतीतिवदेव ख्यातिपञ्चकप्रसिद्धिः। तस्मान्निर्मूलेयं प्रसिद्धिः—

आत्मख्यातिरसत्ख्यातिरख्यातिर्ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥

परन्त्वेतासु ख्यातिषु रामानुजसमर्थिता सत्ख्यातिर्न गृह्यते, भोजराजसमर्थिताऽलौकिकख्यातिः, विज्ञानभिक्षुसमर्थिता सदसत्ख्यातिर्नैव संगृहीताऽतः ख्यातेरियत्ता नास्ति। वैज्ञानिकरीत्या ख्यातिविभागे तु चतुर्विधा ख्यातिः—सत्ख्यातिः, असत्ख्यातिः, सदसत्ख्यातिः, अनिर्वचनीयख्यातिः। एतद्व्यतिरिक्ता ख्यातिर्नैव सम्भाव्यते। अन्यथाख्यातिः, अख्यातिः, सत्ख्यातिः, अलौकिकख्यातिश्च सत्ख्यातिविशेषैव, यतो भ्रमे भासमानं वस्तु देशान्तरे सत्, केषाञ्चिन्मते तत्रैव सत्, यत्राध्यस्तं वस्तु भासते, यथा रामानुजमते सत्ख्यातिः। शुक्तौ रजतप्रतीतिदशायां पञ्चीकरणप्रक्रियया शुक्तौ रजतांशो वर्तते। दोषवशादेव शुक्तावरजतांशस्य ग्रहणं न भवति, केवलं रजतांशस्यैव ग्रहणं जायते। आत्मख्यातिबौद्धमते भ्रमे भासमानं वस्तु विज्ञाने सत्, अलौकिकख्यातिवादिमते भ्रमे भासमानं वस्तु यद्यप्यलौकिकं तथापि सदेव वस्तु, तस्मादिमे सत्ख्यातिवादिनः। अवान्तरमतभेदस्तु कल्पतरावुपबृंहितः। माध्यमिकानां माध्वानां च सम्मताऽसत्ख्यातिः। भ्रमे भासमानं वस्त्वत्यन्तमसदित्याशयः। एतासां ख्यातीनामनिर्वचनीयख्यातिप्रतिष्ठायाञ्च सदसत्ख्यातिः स्वयमेव निरस्ता। सदसत्ख्यातिस्वीकारे कुत्रापि कस्यापि प्रवृत्तिर्न सम्भाव्यते, तस्मात् सत्ख्यातिरसत्ख्यातिश्चानिर्वचनीयख्यातिश्च स्वयमेव सिद्ध्यति। उक्तं कल्पतरौ—

अथवाऽसन्निधानेन सत्ख्यातिरिह वारिता।
अवभासादसत्ख्यातिः नृशृङ्गे तददर्शनात् ॥

(कल्पतरुः, पृ० १९-२०)

एकस्य वस्तुनः सत्यतायामद्वैतवादोऽधिकवस्तुनः सत्तायां द्वैतवाद इति।



# अस्तित्ववादसमीक्षा

**प्रो० सङ्गमलालपाण्डेयः**

आचार्यः, दर्शनविभागस्य

प्रयागविश्वविद्यालये

❀ ❀ ❀

## १. अस्तित्ववादवैशिष्ट्यम्

सम्प्रति अस्तित्ववादमधिकृत्य मतत्रयं प्रचलितमस्ति। तथा हि अस्तित्ववादः सर्वथा नूतनं दर्शनमिति केचिदितिहासकाराः। अस्तित्ववादः किमपि दर्शनं नास्तीति बुद्धिवादिनः। अस्तित्ववाद एव दर्शनमित्यस्तित्ववादिनः।

तत्र बुद्धिवादिनो वदन्ति—यद्यपि बहवः कीर्केगार्डप्रभृतयोऽस्तित्ववादिनः सन्ति, तथाप्यस्तित्ववादो न दर्शनम्। यतो ह्यस्तित्ववादिनोऽस्तित्वं विषयीकृत्य स्वभावाभिव्यक्ति वर्णयन्ति, बुद्धिवादं च खण्डयन्ति। भावाभिव्यक्तिस्तस्या विश्लेषणं च न दर्शनान्तर्गते, यतो हि बौद्धिकं विश्लेषणमेव दर्शनं भवितुमर्हति नान्यदिति।

वस्तुतस्तु अस्तित्ववादिनो बुद्धिवादविरोधिनो निकायविरोधिनो विज्ञानविरोधिनः सर्वविषयतावादविरोधिनश्च भवन्ति। अस्मात् कारणाद् इग्लैण्डदेशे, अमेरिकादेशे चास्तित्वादो दर्शनरूपेण न स्वीक्रियते; किन्तु जर्मनदेशे फ्रांसदेशे च तस्य प्रतिष्ठा दर्शनरूपेण सम्यक् स्थापिता। यतो हि बुद्धिवाद एव न दर्शनम्; अपि तु गम्भीरा दृष्टिरेव दर्शनम्। ज्ञानमार्ग एव न दर्शनपद्धतिः; अपि तु कर्ममार्गभक्तिमार्गावपि दर्शनपद्धती। यो द्रष्टा स एव न दार्शनिकः; अपि तु यः कर्त्ता भोक्ता च सोऽपि दार्शनिकः। अस्तित्ववादिनः सतो जीवनस्य भोक्तारः स्वजीवनस्य च कर्त्तारः। तेषां दृष्टिः संवेगसङ्कल्पाधीना। बुद्धिः कर्मानुसारिणीति मत्वा ते सन्मीमांसन्ते। तेषां कर्त्तृभोक्तृदृष्टिरस्ति। प्रागस्तित्ववाददर्शनं प्रायेण द्रष्टुर्दर्शनमासीत्। अस्तित्ववादश्च मुख्यतः कर्तुर्भोक्तुर्दर्शनमस्तीत्यस्तित्ववादवैशिष्ट्यम्। द्रष्टुर्ज्ञानं कृत्रिमं कल्पितं च भवति; किन्तु कर्त्तुर्भोक्तुर्ज्ञानं सर्वथा वास्तविकं सार्थकं च भवति। तथा हि शिरोवेदनानुभवो रोगिणः। न च स भिषजोऽनुभवः; किन्तु वेदनानिदानं भिषग् जानाति, न रोगीति वेदनाज्ञानं द्विविधम्। प्रथमं भिषजो ज्ञानं शुद्धं बौद्धिकं वेदनारहितं च।

द्वितीयं रोगिणो ज्ञानमबौद्धिकं वेदनासहितं च। एतयोः कस्य ज्ञानं वास्तविकमिति प्रश्ने जाते रोगिणो ज्ञानं वास्तविकमित्यस्तित्ववादिनो वदन्ति। ते च भिषजो ज्ञानं कृत्रिममवास्तविकं च निरूपयन्ति।

पुनश्च नैकायिकचिन्तनं निराकृत्यास्तित्ववादिनश्चिन्तनमात्रस्य स्फुटत्वं प्रतिपादयन्ति। तेषां मते यत् सत्, तत् सर्वं निकायं भिन्दन्ति। निकायो बुद्धिविकल्पानां संघातः। यथा यथा विचार्यते तथा तथा सर्वे बुद्धिविकल्पास्तेषां च संघाताः विशीर्यन्ते। अतो बुद्धिविकल्पानां समष्टिः संघातो वा न सम्भवति। स संघातो निकायो वा दर्शनं वाऽभिधीयते। सर्वाणि दर्शनानि निकायरूपेण प्रतिष्ठितानि; किन्तु सतो यथार्थवर्णनं तैर्न क्रियते। अस्मात् कारणात् तानि सर्वाणि मिथ्याशास्त्राणि। वस्तुतस्तु यथार्थचिन्ततं समस्याविशेषोन्मुखं भवति। का समस्या ? का तस्या व्याख्या ? किं तस्याः समाधानमिति चिन्तनस्य प्रपञ्चः। यथैका समस्या व्याख्यायते समाधीयते च, तथा सर्वाः समस्या न व्याख्यायन्ते समाधीयन्ते च, समस्यानां वैचित्र्यात्। यद्यपि समस्यामूलकं चिन्तनं सम्भवति, तथापि सर्वसमस्यामूलकं चिन्तनं नास्ति। यतो हि सर्वसमस्यासमाधानकारकं किमपि सूत्रं नास्ति। अस्मात् कारणाद् दर्शनशास्त्रस्य समष्टिस्वरूपं विनष्टम्, नवीनं च व्यष्टिरूपं प्रकटितम्। मुक्तकं हि काव्यं न महाकाव्यमिति मत्वा यथा कैश्चित् कविभिः केवलं मुक्तकं रचितम्, तथैव स्फुटं चिन्तनमेव दर्शनं न दृष्टीनां संघातो दर्शनमिति मत्वाऽस्तित्ववादिभिर्दार्शनिकचिन्तनं क्रियते। परमार्थतस्तैर्दर्शनस्य नूतनं स्वरूपं प्रकटीकृतम्। अत एवास्तित्ववादो न केवलं नवीनं दर्शनम्; अपि तु तदेवैकमात्रं दर्शनमिति प्रतिपाद्य सर्वाणि प्राचीनदर्शनान्यस्तित्ववादिभिर्निराक्रियन्ते। प्राचीनानि दर्शनानि कल्पनासंघटकैः सर्वसमस्यानां समाधानं कर्त्तुं यतन्ते; किन्तु तेषां यत्नः काल्पनिको मिथ्या चेत्यस्तित्ववादिनां तर्कपुष्टो निश्चयः।

## २. दर्शनविज्ञानयोर्भेदः

अर्वाचीनयुगे विज्ञानं दर्शनाज्जातमपि दर्शनस्य विरोधं नाशं च करोति। सर्वप्राचीनं दर्शनं विज्ञानसंकीर्णमस्ति। किं दर्शनं किं च विज्ञानमिति विभेदस्तत्र नास्ति। तत्र यत् तर्कसम्मतं तत् सर्वं विज्ञानविषयजातम्। यन्न तर्कसम्मतं तद् मिथ्यैव प्रतिपाद्यते। अस्मात् कारणाद् यथा विज्ञानविकासो भवति, तथा दर्शनस्य पतनं भवति। दर्शनस्य प्रतिरक्षा कथं भविष्यतीत्यस्मिन् प्रसङ्गे दार्शनिकानां चिन्ता दरीदृश्यते। विज्ञानभिन्नं दर्शनमस्ति न वेति प्रश्नः।

अत्रास्तित्ववादिनो विज्ञानप्रहाराद् दर्शनस्य प्रतिरक्षां कुर्वन्ति। तेषां मते दर्शनस्य विषयः सन्मीमांसा विज्ञानविषयश्च पदार्थमीमांसा। दर्शनविधिरपरोक्षज्ञानं

विषयिज्ञानं वा। विज्ञानविधिश्च परोक्षज्ञानं विषयज्ञानं वा। मुख्यतस्तु दर्शनस्य विषयो मनुष्यः। तत्रापि तस्य चैतन्यम्। वैपरीत्येन तु विज्ञानस्य विषयो जगत्, तत्रापि तस्य कार्यकारणश्रृङ्खलाबद्धवर्णनम्। सर्वं विषयज्ञानं विज्ञानान्तःपातीति विज्ञानस्योद्घोषः। अतस्तस्माद् दर्शनं विभेदयन्तोऽस्तित्ववादिनो वदन्ति यद् विषयिज्ञानं तदेव दर्शनस्य विषय इति। एवमात्मैव दर्शनस्य मुख्यो विषयः। तथा सति, अस्ति विज्ञानाद् दर्शनस्य भिन्नत्वम्।

यथा सृष्टिचिन्तकः परमार्थचिन्तकश्च, द्वौ परस्परभिन्नौ चिन्तकौ शङ्कराचार्यैरभिमतौ, तथैव दार्शनिकवैज्ञानिकौ द्वौ चिन्तकावित्यस्तित्ववादिभिर्मन्यते। अस्मात् कारणाद् दर्शनक्षेत्रेषु विज्ञानप्रवेशो न सम्भवति; किन्तु विज्ञानक्षेत्रेष्वपि दर्शनप्रवेशो न भवितुमर्हति। एवं दर्शनविज्ञानयोर्विभाजक–रेखा स्पष्टीकृताऽस्तित्ववादिभिः। अतो विज्ञानान्न कापि हानिर्दर्शनस्य। एवमस्तित्ववादेन वैज्ञानिकयुगे दर्शनस्य प्रतिष्ठापनं कृतम्। तच्च तेषां महत् कार्यम्।

## ३. सन्मीमांसा

अस्तित्ववादिना हाइडेगरमहोदयेन यः सन्मीमांसापरिष्कारः कृतः, सोऽप्यस्मिन् युगे विशेषत उल्लेखनीयः।

'सत्त्वं ( जाइन्डे ), सत् ( साइन ), इह सत् (डासाइन) इति त्रिविधमस्तित्वं तेन निरूपितम्। तत्र सत्त्वं नाम विषयता। तच्च विषयजातभूतमस्तित्वं यथा घटस्यास्तित्वं पटस्यास्तित्वं वा। सदिति नाम सन्मात्रता। तच्च सर्वेषां सद्भावानामस्तित्वं सद्भावो वा। इह सच्च मानवस्यास्तित्वम्, लोके विद्यमानं चित्संयुक्तमस्तित्वं वा। इह सदेव सत्सत्त्वयोर्योजकः। तच्च विषयजातमध्यवर्तित्वेऽपि ततो व्यतिरिच्यते। व्यतिरेकश्च तत्स्वभावः। स्वतोऽपि तदतिरिच्यत इतीह सतो वैशिष्ट्यम्; किन्तु तस्यैहिकत्वम्, अत्रत्यत्वं तत्रत्यत्वं वा दुर्निवारम्। नास्ति तस्यामुष्मिकः पारलौकिको वा भावः अविषयत्वं विषयिरूपेण विराजमानत्वं स्वप्रतिषेधकत्वं च तस्य स्वाभाविको व्यापारः। तेन चास्तित्ववादो लोकायतवादाद् बाह्यार्थवादाद् विज्ञानवादाच्च भिद्यते। पुनश्चेह सतो व्याख्या यादृशी हाइडेगरमहोदयेन कृता, न तादृशी केनाप्यन्येनास्तित्ववादिना। तस्य मत इह सतो घटकभूतानि त्रीणि लक्षणानि—**याथातथ्यम्, अस्तिधर्मिता, पतितत्वं चेति**। याथातथ्यं नाम भूतार्थत्वम्। तच्च देशकालयोः स्थितं किञ्चिद् वस्तुत्वम्। अस्तिधर्मिता नाम चैतन्यशक्तिः, सा स्वप्रयोजनं जानाति। यत् तस्यां निहितमव्यक्तं भवति, तच्च सा व्यक्तीकरोति। **पतितत्वं नाम मनुष्याणां स्ववर्तमानव्यापृतिषु निरतत्वम्**। तेन त आत्मनः परमार्थरूपं विलोपयन्ति, विषयजातानि च स्वस्मिन्नारोपयन्ति। इत्थं तेषां जीवनमात्मवञ्चनामयं भवति। यदा

त आत्मानं विषयजातेभ्यो विमोचयन्ति, सात्त्विकश्रद्धया भविष्यसम्बन्धिनीं चिन्तां च कुर्वन्ति, तदा ते परमार्थतः स्वात्मशक्तिं विज्ञाय सम्भावनानानात्वं प्रति जागरूका भवन्ति । ततश्चाऽऽत्मानं ते वृण्वते पारमार्थिकीमस्तिधर्मितां च प्राप्नुवन्ति । एवमात्मलाभो भवति ।

किन्तु क आत्मा ? तत्रोच्यते—आत्मा नाम 'सत्' इति । नासौ पदार्थः, पदार्थज्ञानहेतुत्वात्; परन्तु अपदार्थत्वे सत्यपि तस्य परमार्थत्वं सिद्धम्, सर्वपदार्थग्राहकत्वात्, पदार्थानां च परार्थत्वात् । सदेवाऽऽत्मा किं वाऽऽत्मैव सत् । न च सत् सामान्यम्, महासामान्यं वा, तस्यापि पदार्थत्वाद् विषयत्वात्, पारतन्त्र्याच्च; परन्तु सर्वेऽस्तित्ववादिनः सतोऽन्वेषणं विवेचनं चान्यथैव कुर्वन्ति । यद्यपि तेषां मते काचित् समानता दृश्यते, तथापि मतभेदोऽपि । वस्तुतस्तु कीर्केगार्ड-यास्पर्स-हाइडेगर-मार्सेल-सत्रि-महोदयानां दार्शनिकचिन्तनमस्तित्ववादाभिधानेन परिकीर्त्यते । नीत्शेमतमप्यस्तित्ववादान्तर्गतमिति केचित् । हुसर्लमतमप्यस्तित्वाद इत्यन्ये; किन्तु नीत्शेमतं सङ्कल्पवादः, हुसर्लमतं चान्तर्दृष्टिवाद ( फिनामेनालाजी ) इति प्रायो दार्शनिकसमाजे प्रचलितमप्यस्ति । अतः कीर्केगार्ड-यास्पर्स-हाइडेगर-मार्सेल-सत्रि-महोदया एव प्राधान्येनास्तित्ववादिन इति सुप्रसिद्धमभूत् ।

मुख्यतस्तु कीर्केगार्डमहोदयोऽस्य दर्शनस्य प्रवर्तकः । तस्य जन्म त्रयोदशाधिकाष्टादशखीस्तशताब्द्यां डेनमार्कदेशे जातम्, निधनं च पञ्चपञ्चाशदधिकाष्टादशखीस्तशताब्द्यां बभूव । यावज्जीवनमविवाहितो भूत्वा स स्वसमकालिक-हेगलदर्शनस्य विरोधं कृतवान् । सर्वबुद्धिवादो वा प्रत्ययवादो वेति हेगलदर्शनम् । तस्य विरोधेन कीर्केगार्डस्य दर्शनमस्तित्ववाद उच्यते । अस्मादस्तित्ववादः सर्वबुद्धिवादविरोधी प्रत्ययवादविरोधी चेति सुस्पष्टं भवति । यत् सत् तत्, सर्वं बुद्धिगम्यमिति हेगलमतम् । विपरीतं तु कीर्केगार्डमतम्—यत् सत्, तन्न बुद्धिगम्यमिति । सतोऽन्तर्भावो न बुद्धिविकल्पे सम्भवतीति कीर्केगार्डस्य सुनिश्चितं मतम् ।

किन्तु नेदं भौतिकवादो वस्तुवादो बाह्यार्थवादो वेत्यपि विज्ञेयम् । यतो ह्यस्मिन् दर्शन आत्मनोऽस्तित्वं प्राधान्येन विविच्यते । सद्भावो ज्ञानभावाद् बुद्धिभावाद्वा प्रागस्तीति सर्वेषामस्तित्ववादिनां मतम् । चैतन्यमेवात्मा । तच्च प्रत्यगात्मैव । न तस्यान्तर्भावः केषुचित् पदार्थेषु सम्भवति । तच्च स्वतः सत् स्वार्थं सद् वेति सत्रिमहोदयेन व्याख्यातम् । तेन च तस्य विभेदः परार्थसतः कृतः । यत् सत् परार्थमस्ति, तद् विषयरूपेणोपभुज्यते । अतः परार्थसद् विषयः स्वार्थसच्च विषयीति सत्रिमतम् । यास्पर्समहोदयेन तु चैतन्यं पूर्णात्मा व्यतिरेकी चेति मतम्, यतो ह्यात्मा सर्वान्तर्यामी भूत्वापि सर्वातिशायी । वेदान्तेषु यथात्माऽन्तर्यामी सर्वातीतश्च मतस्तथा तत् सर्वं यास्पर्समहोदयेन स्वीक्रियते; किन्तु सर्वातीतत्वमेवात्मनो मुख्यलक्षणमिति तस्य मतविशेषः,

सन्मात्रत्वं ( इक्जिस्टेन्स ) सद्भावाद् ( एग्जिस्टेन्स ) अतिरिच्यत इत्यपि तेनाभिव्यक्तम्। 'नेति नेत्यात्मा' इति वेदान्तवादो व्यतिरेकदृष्ट्यैव परमार्थतस्तत्त्वबोधो भवतीति शून्यवादश्च सर्वथा यास्पर्समतेन सह सङ्गच्छेते। अतो बौद्धवेदान्तदर्शनाभ्यां सहास्तित्ववादस्य तुलना बहुभिर्भारतीयदार्शनिकैः प्रदर्शिता; किन्तु कथं वेदान्तस्यात्मवादो बौद्धमतस्याऽनात्मवादेन सह सङ्गच्छेत ? न सङ्गच्छत इत्यस्माकं मतम्; परन्तु वेदान्तस्यात्मवादः कैश्चिदस्तित्ववादिभिः स्वीक्रियते, अपरैस्तु शून्यवादस्यानात्मवादः स्वीक्रियते। यथा वेदान्ती खल्वास्तिकवादी बौद्धश्च नास्तिकवादी, तथैवास्तित्ववादेऽपि केचिद् दार्शनिका आस्तिकवादिनः, ईश्वरवादिनः, आत्मवादिनश्च, यथा-कीर्केगार्ड-यास्पर्स-मार्सेल-महोदयाः। अपरे हाइडेगर-सत्रि-प्रभृतयो नास्तिक्यवादिनो निरीश्वरवादिनोऽनात्मवादिनश्च।

इत्थं केचिदस्तित्ववादिनो बौद्धपक्षपातिनोऽपरे च वेदान्तपक्षपातिनः; किन्तु यास्पर्सस्तयोः समन्वयं करोति। तथा हि चैतन्यं न द्रव्यम्, न गुणः, न च कोऽप्यन्यः पदार्थ इति सर्वेषामस्तित्ववादिनां मतम्। अतश्चैतन्यमेकम्, अनेकं वेति वक्तुं न शक्यते, यतो हि संख्या नाम गुणः, गुणेषु च चैतन्यस्यान्तर्भावोऽशक्यः। पुनश्च चैतन्यं स्थिरं वा चलं वेत्यपि न वक्तुं शक्यते, यतो हि गतिर्नाम कोऽपि पदार्थः ? तस्मिश्च चैतन्यस्यान्तर्भावोऽशक्यः। इत्थं बौद्धवेदान्तयोर्यद् विवादवस्तु, तस्य समाधानमस्तित्ववादिभिः विशेषतः यास्पर्समहोदयेन सम्यक् कृतं चैतन्यस्वरूपं च प्रकटीकृतम्।

## ४. आत्मनो जागतिकसम्बन्धः

अस्तित्ववादिनामात्मवादः प्राचीनात्मवादाद् भिन्नः। स वेदान्तपक्षाद् बौद्धपक्षाच्चापि भिन्नः।

मनुष्य आत्मवान् देहः, आहोस्विन्मनुष्यो देहवान् आत्मा ( शारीरकः ) इति प्राचीनदर्शनम्। तथा सत्यप्यात्मा देहाद् भिन्नः; किन्तु तत्त्वद्वयमेव मनुष्यघटकभूतम्। नास्ति तस्मिंस्तृतीयं तत्त्वं मनुष्यघटकभूतम्। अस्तित्ववादिमतानुसारेण तु मनुष्यघटकभूतं तृतीयं तत्त्वं चिन्तातत्त्वं वर्तते। न चेत् चिन्ता, देहात्मभावापन्नेऽपि मनुष्यो न अभविष्यत्। अतो यथाऽऽत्मा देहश्च मनुष्यघटकौ, तथा चिन्तापि मनुष्यघटकभूता। अत्रैकाख्यायिका वर्ण्यते। आसीत् पुरा ग्रीसदेशे जियसदेवः। तेन मृत्तिका गृहीता। मृत्तिका च मनुष्यदेहाकारा कृता। यद्यप्यात्मा तस्मिन्नाकारे निहिता, तथापि मनुष्यो न जातः। तस्य पुरत चिन्तादेवी प्रकटीभूता। सा मनुष्याकारं प्राविशत्। तदा स आकारो मनुष्यो जातः। सा चिन्ता कर्मभूतेत्यस्माकं मतम्। यथा भारतीयदर्शनेषु जडचेतनाभ्यां भिन्नं कर्म मनुष्यघटकभूतकस्ति, तथाऽस्तित्ववादे कर्मस्थानीया चिन्ता विद्यते। अतश्चिन्तैव मनुष्यजीवनस्य मुख्यं लक्षणम्। चिन्तैव संलग्नता-कर्तव्यपरायणता-दायित्व-श्रद्धा-निष्ठा-प्रेम-प्रभृतिभिः शब्दैर्व्याख्यायते। चिन्तया

आत्मनो जागतिकप्रपञ्चेन सह सम्बन्धो जातः। तस्मिन् सम्बन्धे मनुष्याणां पारस्परिक-सम्बन्धः प्रमुखः। तत्र चाऽऽदान-दानं विचार-विनिमयः, वार्तालापश्च विशेषतः प्रभावकारिणः। अस्मात् कारणादात्माऽनिवार्यतोऽन्यैः सजातीयैरात्मभिः सम्बद्धोऽस्ति। नैकात्मी भवितुमर्हति कोऽप्यात्मा। एकाकीभावः कष्टपदः। तस्य नाम पलायनम्। समुदाये मनुष्यः स्वात्मानं जानाति, साक्षात्कारं च करोति। भाषाया अपि महत्त्वम्, तस्यास्तित्वस्य निर्णायकत्वात्। भाषयैव मनुष्यः स्वात्मानं जानाति, आत्मानुभवं च स्पष्टीकरोति।

मनुष्यचिन्ता कीदृशी वर्तते? इति प्रश्नोऽप्यत्रायाति। तत्रोच्यते—सर्वे मनुष्या भविष्यं प्रति अनिश्चिताश्चिन्ताग्रस्ताश्च सर्वविज्ञानज्ञानं सम्प्राप्यापि ते भविष्यं न जानन्ति। भविष्यस्यानियतत्वमनिश्चितत्वं च चिन्तायाः प्रथमो व्यवहारः। द्वितीयश्च मानवजीवनस्य क्षयः। प्रतिपलं मनुष्यो मृत्युमुपसर्पति। मृत्युचिन्ता तस्मिन् भयं जनयति। मृत्युं जेतुं कामः सोऽमरत्वं कल्पते, भगवन्तं परमात्मानं च परिकल्पते भक्तिं च करोति। भयं त्रासः, दुःखानुभूतिः, प्रणयः, वात्सल्यम्, मैत्री, कलाप्रेम, साहित्य-प्रेम, भगवद्भक्तिरित्येवमादयः सर्वेऽनुभवाश्चिन्ता-गर्भान्निःसृताः। अपि च चिन्ताभावादस्तित्ववादिनां मते परमार्थतत्त्वं जगद्बाधेन न सङ्गच्छते। अतः प्रपञ्चविलयवादः, प्रपञ्चशून्यतावादश्च नास्तित्ववादिभिः स्वीक्रियेते। इत्थमस्तित्ववादो वेदान्तवाद-बौद्धवादाभ्यां भिद्यते। अस्तित्ववादिनां मते नात्माऽमरः। यदा देहनाशो भवति तदाऽऽत्मापि विनश्यतीति सत्रि-हाइडेगरौ। स कथमपि परमार्थ-सद्भावापन्नो भवतीति कीर्केगार्डयारूपसौ; किन्तु चरमद्वयमतेऽपि सद्भावापन्न आत्मा न जीवात्मा। अतो नास्ति जीवात्मनोऽमरत्वं नाम कापि दशा। मृत्युः सर्वासां सम्भावनानामन्त इति हाइडेगरवचनमत्र प्रमाणम्।

अपरं च भविष्योन्मुखता अभावसाम्मुख्यमज्ञातसाक्षात्कारयोगश्च सतो लक्षणानि। अतीतोन्मुखता वर्तमानविद्यमानता च तस्य गौणं कृत्रिमं लक्षणम्; किन्तु भविष्योन्मुखत्वेऽपि सतः, स्वपूर्णतां प्रति यतत इति यास्पर्सः। तच्च स्वविलयं प्रति मृत्युं प्रति वा यतत इति सत्रिहाइडेगरौ।

## ५. स्वातन्त्र्यवादः

स्वतन्त्रः कर्तेति पाणिनिसूत्रम्। स्वातन्त्र्यकर्त्तुर्लक्षणमिति नीतिशास्त्रकाराः। आत्मा कर्तेत्यस्तित्ववादिनः। अतश्चात्मा स्वतन्त्र इत्यस्तित्ववादिनां निष्कर्ष-स्तर्कसङ्गतः।

परमार्थतस्त्वस्मिन् युगे मानवस्वातन्त्र्यहानिकारणसामग्री पुष्कलमात्रायां दृश्यते। राज्यं मानवस्वतन्त्रतां सर्वत्र तथैवापहरति, यथा पुरा रावणः सीतामपाहरत्।

विज्ञानसंसाधनैः सन्नद्धं समृद्धं च राज्यं पूर्णब्रह्मजातमिति केचित् साम्यवादिनः। अब्रह्मत्वेऽपि राज्यं समतासंस्थापनाय मानवस्वातन्त्र्यमपहर्तुमर्हतीत्यन्ये साम्यवादिनः। अतो न स्वातन्त्र्यं परमार्थ इति सर्वेषां साम्यवादिनां मतम्। अत्रास्तित्ववादिनः साम्यवादं न सहन्ते। वर्गकुटुम्ब-समाज-राष्ट्र-राज्यप्रभृतयो मानवस्वातन्त्र्यस्य विघ्नकारका इति तेषां सुनिश्चितं मतम्। अतस्ते मानवस्वातन्त्र्यं तेभ्यो रक्षन्ति। पुनश्च ते मानवस्वातन्त्र्यं परमार्थं मन्यन्ते, स्वातन्त्र्यस्य च गभीरविवेचनं कुर्वन्ति। अत्र सत्रिमतं महत्त्वपूर्णम्। तस्य मते मनुष्यः स्वतन्त्रः, जिज्ञासाभावात्, प्रतिषेधभावात्, कल्पनाभावाच्च। अतः स कार्यकारणनियताद् जगतः पलायनं कर्तुं समर्थः; किन्तु स्वातन्त्र्यं न तत्त्वम्। न तत् शैवमतस्य विमर्शः। अहं स्वतन्त्रो भवितुमभिशप्त इति सत्रिवचनम्। कोऽपि स्वतन्त्रतां त्यक्तुं न समर्थः। यतो हि स्वातन्त्र्यमेव मानवलक्षणम्, न च तद् मानवोपर्यारोपितः कश्चन गुणः। यः स्वतन्त्रतायाः प्रतिषेधं करोति, सोऽन्धश्रद्धयैव तथा करोति। सात्त्विकश्रद्धया न कोऽपि स्वतन्त्रतां निवारयितुमर्हति। स्वातन्त्र्यं च परमार्थताऽपरिभाष्यम्, अनभिधेयं च आत्मवत्, अपदार्थत्वात्; किन्त्वपदार्थत्वेऽपि सतोऽभिन्नत्वात् तस्य सार्थकत्वमनिवार्यम्।

स्वातन्त्र्यस्य व्यवहारः कार्यविशेषवरणरूपेण सर्वैर्मनुजवर्यैरनुभूयते। न किमपि कर्म नियतमस्ति। सर्वत्र नियतं मानवकर्तृत्व-सापेक्षं च भवति। कर्तृत्वस्य सम्भावना च विविधा; किन्तु यत् क्रियते तस्य दायित्वं कर्त्तुरेव। तेन कर्मणा कर्त्तुश्चरित्रं निर्मीयते। एवं दायित्वबोधो वरणव्यवहारश्च मानवस्वातन्त्रसिद्धये हेतुभूताविति सर्वेषामस्तित्ववादिनां मतम्।

दुःख-त्रास-चिन्ताप्रभृतीनामनुभवः सर्वथा स्वातन्त्र्योपकारकः। वैपरीत्येन सुख-विश्राम-मुक्तिप्रभृतीनामनुभवाः स्वातन्त्र्यापकर्षकाः। वस्तुतस्तु संघर्षः स्वातन्त्र्यप्राप्त्यवसरः। तेन स्वातन्त्र्यं सर्वदैव वर्धते। अतः क्रान्तिः स्वातन्त्र्यप्राप्त्यर्थं प्रायः स्वतन्त्रविचारकैः प्रस्तूयते। 'अहं क्रान्तिं करोमि अतोऽहमस्मि' इत्यस्तित्ववादिनः "कामू" महोदयस्य वचनम्। इदं वचनमस्तित्ववादपक्षमतीव विस्पष्टं करोतीति मम मतम्।



# महाभारतयुद्धं कदाऽभूत्

डॉ० देवसहायत्रिवेदः

एम० ए०, पी-एच्० डी०

प्राकृत-विद्यापीठम्, वैशाली

❀ ❀ ❀

महाभारतयुद्धं कदाऽभूदिति विषये विदुषां विभिन्नं मतं दृश्यते[1]।

कथं विदुषां विभिन्नमतमैतिहासिकमहाभारतयुद्धकालविषये ? आधुनिकभारतस्येतिहासस्य द्वे आधारशिले। आर्याणां भारताक्रमणं तथा सिकन्दर-चन्द्रगुप्त-मौर्यस्य समकालिकता। पाश्चात्यविद्वद्भिः प्रतिपादितं यद् भारतं प्रथमं निर्जनमासीत्। अत्र क्रमशो वनवासिन आदिवासिनो लेमुरियातः समायाताः। तत उपरि द्रविडा उत्तरपश्चिमतः समायातास्त आदिवासिनो जंगले प्रेषयामासुः। द्रविडास्त्वार्यैर्दक्षिणावर्ते प्रेषिताः। कालान्तरे यवना बहिर्देशात् समागत्य राज्यमकुर्वन्। पुनश्च यूरोपीया अत्र समागताः। अतोऽत्र सर्वे वैदेशिकाः। न कोऽपि भारतस्य मूलवासी,

---

१. यथा—८९९ खृष्टाब्दः=४००० कलिसंवत् ( मेजर एल० बी० एल० ); ५७५ खृष्टाब्दात् पूर्वं = २५२६ कलिसंवत् ( बेंटले ); ९५० खृष्टाब्दात् पूर्वं = २१५१ कलिसंवत् ( पार्जिटर प्राचीन भारतीय ऐतिहासिक परम्परा, पृष्ठ १७९-८३ ); १००० खृष्टाब्दात् पूर्वं = २१०१ कलिसंवत् ( बृजवासीलाल हस्तिनापुरखनन); ११५१ खृ० पू०=१९५० कलिसंवत् ( सीतानाथ प्रधान प्राचीनभारतीयकालक्रमः, पृ० २६२–९ ); ११९४ खृ० पू०=१९०७ कलिसंवत् ( वेलन्दी ऐयर ); १२५० खृ० पू० = १८५१ कलिसंवत् ( केशव लक्ष्मण दफ्तरी प्राच्यसम्मेलनविवरणम् १२।२।४८१–८९ ); १२६७ खृ० पू०=१८३४ क० सं० ( केलकर प्राच्यसम्मेलन-विवरणम्, १।४५२); १२८० खृ० पू०=१८२१ क० सं० (कैलासचन्द्रवर्मा, कुरुभारती, मेरठ, १९७६ ई०, पृष्ठ १२–४४); १४०० खृ० पू०=१७०१ कलिसंवत् ( हरितकृष्णदेव, बंग एशियाटिक सभा-पत्रिका २१।२११–२०); १४१६ खृ० पू०=१६८५ क० सं० ( राधाकुमुद मुखर्जी, हिन्दूसभ्यता १।१७२); १४१७ खृ० पू०=१६८४ क० सं० (असितकुमार चटर्जी, बिजनौर संगोष्ठी); १४२४ खृ० पू० = १६७७ क० सं० ( काशीप्रसाद जायसवाल, बिहारोत्कल-शोधसमितिपत्रिका, १।६९–११६); १४३० खृ० पू० = १६७१ क० सं० (अलक्षेन्द्र कनिंघम, भारतस्य प्राचीनभूगोलम्, पृ० ४१३); १५०८ खृ० पू० = १५९३ क०सं० (काले, भारतीयेतिहाससम्मेलनविवरणम्, ३।१५२);

सर्वे भारतीया दासाः। अत्र वैदेशिका एव राज्यं कुर्वन्ति। अत आङ्ग्ला भारते राज्यं कुर्वन्ति चेत्, तत्र को दोषः ? भारतं स्वतन्त्रं भवितुं नार्हतीति पाश्चात्त्येतिहासकाराणां राजनीतिः। आङ्ग्लदेशस्य श्वेतशाला ( Whitehde ) निर्देशात् काल्डवेल-मेकाले-मैक्समूलरादिभिः आर्यानार्यद्रविडसिद्धान्तप्रतिपादनं निराधारम्।

१७९४ खृष्टसंवत्सरे=४८९५ कलिसंवत्सरे कलिकाता उच्चन्यायालयस्य मुख्यन्यायमूर्तिना श्रीविलियमजोंसमहोदयेन बंग-एशियाटिक-समित्यध्यक्षेण सूचितं यद् मुद्राराक्षसस्य चन्द्रगुप्तमौर्यः मेगास्थनीजलिखितस्य इण्डिको पुस्तकस्य 'सन्द्राकुतस्' इति भवितुमर्हति; किन्तु 'इण्डिका' तु मूलरूपेण नष्टा। तत्र मौर्यशब्दस्य समुल्लेखोऽपि न वर्तते। चन्द्रगुप्तमौर्यस्तु चाणक्यहस्ते काष्ठपुत्तलीक आसीत्। महत् साम्राज्यं तु स नन्दवंशादुत्तराधिकारे प्राप्तवान्, न तु स्वपराक्रमात्। मैक्समूलरमहोदयेन भणितं यद्यप्यस्मिन् समीकरणे महादोषस्तथापीदमेव ग्राह्यम्। एवं तावदाधारमेवावलम्ब्य भारतीयेतिहासस्य लेखनमुचितम्। अतो विसेण्ट-आर्थरस्मिथमहोदयेन भारतस्य प्राचीनेतिहासो लिखितः। ततः १/३ भागः सिकन्दरस्याक्रमणेन रञ्जितः। यद्यपि प्राचीनभारतीयसाहित्ये कुत्रापि सिकन्दरस्याक्रमणोल्लेखस्य संकेतोऽपि न वर्तते। इतिहासे सर्वे दोषाः सिकन्दरचन्द्रगुप्तमौर्यसमकालिकतायाः। सत्यं तु सिकन्दरस्य समकालिकः समुद्रगुप्तः गुप्तसम्राडासीद् यो ग्रीकलेखकैः 'सन्द्राकुयतस्'

---

१८६७ खृ० पू०=१२३४ क० सं० ( त्रिवेदस्य प्राङ्मौर्यविहारस्य इतिहासम्, पृ० १५६ ); १९२२ खृ० पू० = ११७९ क० सं० ( महामहोपाध्याय सतीशचन्द्र विद्याभूषण ); १९३१ खृ० पू०=११७० क० सं० ( पाण्डुरंग वामन काणे, धर्मशास्त्रस्येतिहासः, ३।१२३ ); २४४२ खृ० पू०=६५९ कलिसंवत् ( राजाराम गंगानाथ-शोधसंस्थानपत्रिका, २।१२४ ); २४४९ खृ० पू० = ६५२ क० संवत् ( प्रबोधचन्द्र सेनगुप्त ); ३०६७ खृ० पू० = ३४ कलिसंवत् ( ऐयगर बीजनीरसंगोष्ठी ); ३१०२ खृ० पू०=१ कलिपूर्वं ( चिन्तामणिविनायकवैद्यस्य संस्कृतसाहित्यस्येतिहासः, ४।४-८); ३१३७ खृ० पू०=३६ कलिपूर्वं ( देवसहायसाधुशरणत्रिवेदस्य भारतीयकालक्रमः, पृ० १३ ); ३१३८ खृ० पू० = ३७ कलिपूर्वं ( युधिष्ठिरमीमांसकः, भगवद्दत्तः); ३१४० खृ० पू०=३९ कलिपूर्वं ( राय, भारतीयेतिहाससमितिविवरणम्, ४।११५ ) ३१४८ खृ० पू०=४७ कलिपूर्वं ( देवदत्तरामकृष्णमणकस्य पौराणिककालक्रमः, १०।१०७); ३१६२ खृ० पू०=६१ कलिपूर्वं (रंगराजन् एवं वेंकटाचलैया, भारतीयेतिहाससम्मेलनविवरणम्, ३।१६१ ); ५५२८ खृ० पू०=२४२७ कलिपूर्वं ( रघुनाथ लेले प्राच्यसम्मेलनविवरणम्, १।४५२-५३); ६००० खृ० पू०=२९९९ ( कलिपूर्वं टालवाय ह्वीलर ); १९००० खृष्टाब्दात् पूर्वं ( दीनानाथशास्त्री चुलैट ) इति।

इति नाम्नाभिहितः। समुद्रगुप्तेनैव सिकन्दरः पराजितो हृतश्च। तेनैव सिकन्दरस्य सेनापतेः सेल्युकस्य कन्यायाः पाणिर्गृहीतः। मेगास्थनीजश्च समुद्रगुप्तस्य राज्यसभामागतः। भ्रान्तगणनाधारान्महाभारतयुद्धकालोऽपि विद्वद्भिर्भ्रमे निपातितः।

महाभारतस्य नेता श्रीकृष्णस्तस्य सखा चार्जुनः। अर्जुनस्य पौत्रोऽभिमन्युपुत्रः परीक्षितो जन्मकालो युद्धभूमौ। महापुराणेषु नन्दपरीक्षिताभ्यन्तरकालद्योतनार्थो निम्नश्लोको दृश्यते—

महापद्माभिषेकात् तु जन्म यावत् परीक्षितः।
एकं वर्षसहस्रं तु ज्ञेयं पञ्चशतोत्तरम्॥

अत्र पाठभेदात् तृतीयचतुर्थपादयोरर्थो विभिन्नः कृतो यथा ५१५, ५३०, ५५०, ८५०, ९५०, १०१५, १०५०, ११११५, १५००, १५०१, १५०३, १५१०, २५०० वर्षाणि। विद्वद्भिस्तु सिकन्दरस्याक्रमणकालः ३२५ खृष्टाब्दात् पूर्वं=२७७६ क० सं० स्वीकृतः। अत एव परीक्षितकालोऽपि विभिन्नः; किन्तु पुराणेषु ज्योतिःशास्त्रस्य गणना वर्तते, येन कुत्रापि गणनादोषो न भवेत्। तत्र कथितम्—

यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः।
तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति॥

सप्तर्षयस्तु प्रतिनक्षत्रे शतं शतं चरन्ति वर्षाणाम्। यदि मघातः पूर्वाषाढपर्यन्तं सामान्यगणना क्रियते, तदा मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, हस्त, चित्रा, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूल, पूर्वाषाढेत्येकादशनक्षत्राण्येव भवन्ति। भाष्यकाराणामपि ज्योतिःशास्त्रस्याल्पज्ञानत्वादर्थस्यानर्थः कृतः।

प्रत्यब्दं प्राग् गतिस्तेषाम्। आङ्ग्लभाषायामपि Precession शब्द एवं सूचयति। यदि व्यतिरेकगणनया गण्यते तदाऽऽश्लेषा, पुष्य, पुनर्वसु, आर्द्रा, मृगशिरस्, रोहिणी, कृत्तिका, भरणी, अश्विनी, रेवती, उत्तराभाद्रपद, पूर्वाभाद्रपद, शतभिष्, धनिष्ठा, श्रवण, उत्तराषाढा, षोडश नक्षत्राणि भवन्ति ( २७ – ११ = १६ नक्षत्राणि )। तस्मिन् काले

| | | | | |
|---|---|---|---|---|
| बार्हद्रथवंशस्य | ३२ राज्ञां | राज्यकालः | १००१ | वर्षाणि |
| प्रद्योतवंशस्य | ५ ,, | ,, | १३८ | ,, |
| शिशुनागवंशस्य | १२ ,, | ,, | ३६२ | ,, |
| अतः | ४९ राज्ञां | राज्यकालः | १५०१ | वर्षाणि |

तेषां मध्यमानं तु १५०१/४९=३००६ वर्षाणि प्रतिराजम्। महाभारतयुद्धकालविषये

कुत्रापि सन्देहो न वर्तते। सर्वे स्वीकुर्वन्ति यद् भारतयुद्धं कलियुगे ३६ वर्षेभ्यः पूर्वमभूत्। यथा गान्धारी कृष्णमशपत्--

त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः॥
कुत्सितेनाभ्युपायेन निधनं समुपास्यसि॥

साम्प्रतं कलिसंवत् ५०८२ प्रवर्तते। निधानपुरताम्रपत्रम्, ऐहोलशिलालेखः, जयशलमेरु-अभिलेखः, सुमतितन्त्रम्, 'आइने-अकबरी' इत्यादीनां सर्वेषां मते कलेः प्रादुर्भावकाल एक एव। केवलं कल्हणेन लिखितं यत्—

शतेषु षट्सु सार्द्धेषु त्र्याधिकेषु च भूतले।
कलेर्गतेषु वर्षेषु अभवन् कुरुपाण्डवाः॥ (राजतरंगिणी)

किन्तु तेनैव स्वयं लिखितम्, न कोऽपि तं विश्वसेत्—

भारतं द्वापरान्तेऽभूद् वार्तयेति विमोहिताः।
केचिदेषां मृषा तेषां कालसंख्यां प्रचक्रिरे॥ (राजतरंगिणी)

कल्हणस्तु युधिष्ठिरस्य कालविषये कथयति—

आसन् मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ।
षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्यस्य॥ (राजतरंगिणी)

इयमार्या तु वृद्धगर्गेण, वराहमिहिरेण, कल्हणेन चाक्षरशः समुद्धृता। वृद्धगर्गकाले, वराहमिहिरकाले तु शालिवाहनशकस्य नामापि नासीत्। अत्रापि षड्द्विकपञ्चद्विपदस्य विभिन्नोऽर्थः क्रियते, यथा ६५० (२६ × २५); १६५० (६६ × २५); २५१२, २५२६, २५६६, ५५५५५५० (२२२२२२ × २५); वा ४९३८२१७२८४ (२२२२२२ × २२२२२) वर्षाणि। सर्वे स्वीकुर्वन्ति यद् युद्धकाले मुनयो महर्षयो मघास्वासन्। श्रीथिरुवेङ्कटाचार्यमहोदयेन तावदान्ध्रशकस्योत्पत्तिकालः प्रभवसंवत्सराद् विजयसंवत्सरस्थाने खृष्टाब्दात् पूर्वं ५५० वा ५४५ वर्षे कलिवर्षे २५५१ वा २५५६ कृतः। तत्र २५२६ + ५५० = ३०७६ खृ० पू० कलिसंवत्सरे २५ पाण्डवानामन्तिमगतिः। यथा—

कलेर्गते सायकनेत्रवर्षे सप्तर्षिवर्या त्रिदिवं प्रयाताः।
लोके हि संवत्सरपत्रिकायां सप्तर्षिमानं प्रवदन्ति सन्तः॥

अतः कथयितुं शक्यते यद् युद्धं कलेः ३६ वर्षेभ्यः पूर्वं ३१३७ खृष्टाब्दात् पूर्वमभूत्। तत्र तु महाभारते लिखितं भीष्मः कथयति—

माघोऽयं समनुप्राप्तो मासः सौम्यो युधिष्ठिर !।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥

भीष्माष्टमी तु माघशुक्लाष्टम्यां जायते। भीष्मस्तु दशमे दिने धराशायी बभूव। अतः पूर्वगणनान्माघशुक्लपक्षस्याष्टौ दिनानि + माघकृष्णस्य पञ्चदश दिनानि + पौषमासस्य त्रिंशद्दिनानि + मार्गशीर्षस्य च पञ्चदश दिनानीति मिलित्वा ६८ दिनानि भवन्ति। अतो युद्धारम्भकालो भौमवारो मार्गशीर्षप्रतिपत् कलेः पूर्वं ३६ वर्षाणि = १४ नवम्बर ३१३७ खृष्टाब्दात् पूर्वमिति। गणनाया अयमेव काल आधारो भवितुमर्हतीति[1]।



---

१. (क) काणे-स्मारक-ग्रन्थावलिः, १९४०, पृ० ५१५–२५ ( भारतयुद्धकालः )।
(ख) काश्मीरराजवंश, जर्नल आव इण्डियन हिस्ट्री, मद्रास, १८।४९–६७।
(ग) नन्दपरीक्षिताभ्यन्तरकालः, तत्रैव, १९।१–१६।
(घ) इतिहासस्य नूतनशिलाधारः, भारतीय विद्याभवन, बम्बई, ६।११७–२३।
(ङ) प्राङ्मौर्यविहारः, बिहारराष्ट्रभाषापरिषद्, पटना।

# शब्दानुविद्धं सर्वं ज्ञानम्

डॉ० रामनारायणदासः
प्रवाचकः,
व्याकरणविभागस्य,
श्रीगुरुवायूरकेन्द्रीयसंस्कृतविद्यापीठम्, पुरनाट्टुकरा,
त्रिचूर, केरल

❀❀❀

प्रत्यक्षानुमानोपमानशब्देति चतुर्विधप्रमाणमनुसृत्य बोधोऽपि चतुर्विधं विभागं भजते। प्रत्यक्षप्रमाणेन जायमानं ज्ञानम् इन्द्रियार्थसन्निकर्षजन्यम्, इन्द्रियाणां प्रत्यक्षज्ञानस्य करणत्वात्। अनुमानप्रमाणेन जन्योऽनुमितिबोधः, लिङ्गपरामर्शजन्यः, लिङ्गपरामर्शस्य स्वार्थानुमितिपरार्थानुमित्योः करणत्वात्। एवमुपमानप्रमाणेनाऽनुभूयमान उपमितिबोधः सादृश्यज्ञानजन्यः, सादृश्यज्ञानस्य तत्र करणत्वात्। अत्र बोधेऽतिदेशवाक्यार्थस्मरणमपेक्ष्यते। संज्ञासञ्ज्ञिसम्बन्धज्ञानमुपमितिः। गोसदृशो गवयो भवतीति केनचिद् वृद्धेनोपदिष्टोऽरण्यं गतः सन् यदा गवयं पश्यति, तदा वृद्धोपदिष्टं वाक्यार्थं स्मृत्वा "अयं गवयशब्दवाच्यः" इत्युपमितिर्जायते। उप समीपे मितिर्ज्ञानमुपमितिरित्युपमितिशब्दस्य व्युत्पत्तिः। एवं शाब्दप्रमाणेन जायमानः शब्दबोधः शक्तिग्राहकव्याकरणादिजन्यः, व्याकरणादीनां तत्करणत्वात्। नव्यनैयायिकास्तु पदज्ञानं शाब्दज्ञानस्य करणं स्वीकुर्वन्ति। तदुक्तं श्रीविश्वनाथेन कारिकावल्याम्—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणो॥

शक्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिः शाब्दबोधं प्रति कारणमिति कारिकाशयः।

वस्तुतस्तु "सर्वविधोऽपि बोधः शब्दानुस्यूतः" इति सिद्धान्तस्य सत्त्वेन प्रत्यक्षमनुभूयमानत्वेन च "प्रत्यक्षानुमानोपमानशब्देति प्रभावचतुष्टयेन जायमाना प्रमा शब्दानुवेधसाहित्यं न त्यजति। सर्वेऽर्थाः सर्वथा सर्वदा नामधेयेनान्विताः। कश्चिदप्यर्थः कदाचिद् नामधेयेन न वियुज्यते। सूक्ष्मस्य शब्दस्य मनसोच्चारणाद् मौनदशायामपि प्रत्यक्षमनुमानमुपमानं वाक्सम्पृक्तमेवानुभूयते। मूकस्य कर्णवधिरस्य वा हस्ताङ्गुलिसङ्केतेन, इन्द्रियार्थसन्निकर्षेण वा जायमानो बोधः शब्दानुविद्धो निश्चीयते।

यत्तु "समर्थः पदविधिः" (पा० सू० २।१।१) इति सूत्रस्य भाष्ये "अन्तरेण खल्वपि शब्दप्रयोगं बहवोऽर्था अवगम्यन्ते अक्षिनिकोचैः पाणिविहारैश्च" इत्युक्तम्, तत्तु कण्ठताल्वादिव्यापारेणोच्चार्यमाणपरश्रोत्रग्राह्यवैखर्यात्मकशब्दविषये भगवता पतञ्जलिना प्रोक्तम्। अक्षिनिकोचपाणिविहारयोरुक्तवाक्ये प्रयोगाद् एतत् तथ्यं दृढीभवति; किन्त्वक्षिनिकोचपाणिविहारयोरर्थं चक्षुरिन्द्रियस्य सन्निकर्षे सति मनसोच्चारितशब्देनैव अक्षिनिकोचादिक्रियाया आशयं प्रयोक्ता तद्ग्रहीता च जानीतः। शब्दस्योच्चार्यमाणपरश्रोत्रग्राह्यः प्रयोगः शब्दप्रयोगोऽत्र ग्राह्यः, न तु चैतसस्य यद्वा बौद्धस्य शब्दस्य प्रयोगः। अक्षिनिकोचवान् पाणिविहारवाँश्च तदर्थवाचकशब्दस्मरणपूर्वकमेव हस्ताङ्गुल्यादिभिः विहारादिक्रियां करोति, ग्रहीता चाक्षिनिकोचं पाणिविहारञ्च दृष्ट्वा तत्तदर्थवाचकशब्दस्मरणपूर्वकमेवाक्षिनिकोचादेराशयमवगच्छति। मनसा चेतसा वा कस्यचिदर्थस्य स्मरणे तत्तदर्थवाचकशब्दस्यापि भावनं जायते। एवमेव "स्वं रूपं शब्दस्याशब्दसंज्ञा" (पा० सू० १।१।६८) इति सूत्रस्य भाष्ये "शब्देनोच्चारितेनार्थोऽवगम्यते, गामानय, दध्यानय" इति यद् उक्तम्, तदपि "गामानय, दध्यानय" इत्युदाहरणदानेनोच्चार्यमाणपरश्रोत्रग्राह्यशब्दविषय एव, श्रोतुः प्रवक्त्रोच्चारितेन शब्देनैव प्रवक्तृमानसाशयज्ञानं जायते। यावत्कालं कश्चिदर्थवच्छब्दं न प्रयुङ्क्ते कण्ठताल्वादिव्यापारेण परश्रोत्रग्राह्यशब्दं नोच्चारयति, न तावत्कालं तस्य मनसीप्सितमपरो जानाति। तस्मात् प्रवक्तृश्रोतृविषयकमिदं भाष्यम्। अक्षरस्मृतेः लिपीनां दर्शनसमयेऽपि मनसोच्चारितशब्देनैवार्थज्ञानं भवति, न त्वक्षरस्मारकलिपिदर्शनमात्रेण। "उच्चरितः शब्दः प्रत्यायको भवति, नानुच्चरितः" इत्यत्र तु मानसिकोपांशुपरश्रोत्रग्राह्यमिति त्रिविधमप्युच्चरितत्वं ग्राह्यम्। "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया···" (पा० शि० ६)। अत्र शिक्षायाम् आत्मा बुद्ध्याऽर्थान् समेत्य मनसा तत्तदर्थवाचकशब्दान् आनुपूर्वीरूपेण स्मरति। अत्रोच्चारणं स्मरणात्मकं भवत्येव। परार्थं बुभुत्सया तु वक्त्रोद्घातादिरूपं परश्रोत्रग्राह्यमुच्चारणमपेक्ष्यते। "उच्चरितः शब्दः प्रत्यायको भवति, नानुच्चरितः" इत्यस्याः पङ्क्तेरनुभवस्वारस्यादयमेवाशयः।

तदित्थमर्थबुभुत्सया शब्दस्योच्चारणमपि द्विविधं विद्यते—१—आभ्यन्तरम्, २—बाह्यं चेति। आभ्यन्तरं मानसिकम्, बाह्यं परश्रोत्रग्राह्यम्। अक्रमिकस्य बौद्धस्यार्थस्य वाचकोऽक्रमिको बौद्धः शब्दः, तस्यापि बौद्धमुच्चारणम्, यद्वा मानसिकं स्मरणमक्रमिकमेव भवति।

अर्थज्ञानं शब्दमपेक्षते। चक्षुरिन्द्रियेण घटस्य संयोगे सत्यपि तज्ज्ञानं प्रत्यक्षप्रमाणेन तद्वाचकशब्दज्ञानं विना नैव जायते। अतः श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ १२३ ॥

आद्यः करणविन्यासः प्राणस्योर्ध्वसमीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनम् ॥ १२२ ॥

सद्याजातस्य शिशोर्य आद्यः करणविन्यासः प्रथमं करणानां प्रयत्नानां विन्यासः, यद्वा, सद्यः प्रसूतः शिशुः पित्रा मुखे हुते मधुसर्पिणी जिह्वया लेढि इत्याकारको य आद्यः करणविन्यासः, प्राणाँश्चोर्ध्वं समीरयति यच्चोच्छ्वसितीत्यर्थः, उदीरितेन वायुना कण्ठादिस्थानान्यभिहन्ति, तत्सर्वमन्तः शब्दभावनं विना न सम्भवति। सर्वविधमपि ज्ञानं शब्दरूपानुषङ्गमेव जायते । किञ्च, योगजप्रत्यक्षजन्यं यद्वा—

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥ ( वा० प० १।३७-३८ )

इति कारिकोक्तमार्षज्ञानमपि शब्दानुविद्धमेव भवति। लौकिकप्रत्यक्षस्य कृते विषयेन्द्रियसम्बन्धस्यापेक्षायां सत्यामपि योगजप्रत्यक्षे यद्वाऽऽर्षज्ञानप्रत्यक्षे तस्याकरणत्वेन "आर्षज्ञानमप्रमाणम्, प्रत्यक्षे विषयेन्द्रियसम्बन्धस्य करणत्वात्" इत्याकारकानुमानेन तेषामृषीणां वचनस्य बोधः कर्तुं नैव शक्यते। तस्य चार्षज्ञानस्य शब्दानुषङ्गिकत्वमपि निराबाधम्, सूक्ष्मज्ञानार्थयोः सूक्ष्मशब्देन सम्पृक्तत्वात्। यद्वाऽतीन्द्रियज्ञानार्थयोरतीन्द्रियशब्देन सम्पृक्तत्वादतीन्द्रियज्ञानार्थशब्दानां सम्बन्धोऽप्यतीन्द्रियः। तदित्थं सर्वविधोऽपि बोधः शाब्द इत्येवं वक्तुं वयं प्रभवामः। इन्द्रियार्थसन्निकर्षस्य सत्त्वेऽपि पदपदार्थयोर्वाच्यवाचकरूपसम्बन्धज्ञानं विना प्रत्यक्षमप्रमाणमेव भवति। यथा घटशब्दार्थयोर्ज्ञानात् पूर्वं चक्षुरिन्द्रियेण घटस्य प्रत्यक्षत्वेऽपि तस्य सम्यग्ज्ञानं नोदेति। चक्षुरिन्द्रियस्य घटरूपार्थेन सह सन्निकर्षाभावे तु घटशब्देन घटस्य ज्ञानं जायत एव कस्यचिद् वृद्धस्य; किन्तु शब्दप्रमाणं विना केनचिदपि प्रमाणेन कस्यचिदर्थस्य ज्ञानं नैव जायते।

किञ्च, शब्दोऽपि शब्दस्यार्थः ( संज्ञी ) भवतीति शाब्दिकानां सरणिः क्वचिद् दृश्यते। यथा "अग्नेर्ढक्" (पा० सू० ४।२।३३) इति सूत्रे "अग्नि" इति संज्ञाया अग्निशब्द एव संज्ञी। संज्ञासंज्ञिभेदेनाग्निशब्दयोः ( प्रयोगस्थ-सूत्रस्थाग्निशब्दयोः ) भेदेऽपि शब्दोऽप्यर्थविशिष्टस्य शब्दस्य संज्ञी। एतत् तथ्यं भगवान् पाणिनिरपि "स्वं रूपं शब्दस्याशब्दसंज्ञा" (पा० सू० १।१।६८) इति सूत्रेण पुपोष। श्रीभर्तृहरिरपि वाक्यपदीयस्य ब्रह्मकाण्डे प्राह—

"वृद्धयादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः ॥ ५९ ॥

अग्निशब्दस्तथैवायमग्निशब्दनिबन्धनः ।
अग्निश्रुत्यैति सम्बन्धमग्निशब्दाभिधेयया" ॥ ६० ॥

शब्देऽपि स्वात्मानं प्रकाशयन्नर्थविशिष्टस्य शब्दस्य क्वचिच्च केवलं शब्दमात्रस्य प्रकाशकः, लोके तु शब्दप्रकारकार्थस्य स्वस्य च प्रकाशकः। तदुक्तं श्रीभर्तृहरिणा वाक्यपदोयस्य ब्रह्मकाण्डे—

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥ ५५ ॥

विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ॥ ५६ ॥

अतोऽनिर्ज्ञातरूपत्वात् किमाहेत्यभिधीयते ।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा ॥ ५७ ॥

अनिर्ज्ञातरूपत्वादनिर्ज्ञातम्=अज्ञातम्, रूपम्=स्वरूपम्, आनुपूर्वीरूपं यस्य स तस्माद् भावे त्वल्, पञ्चम्येकवचनेऽनिर्ज्ञातरूपत्वादिति व्युत्पत्तिः। "विभाषा गुणेऽस्त्रियाम्" (पा० सू० २।३।२५) इति हेत्वर्थे पञ्चमी। अर्थस्याविद्यमानेऽपि घटादिशब्देन तद्वाच्यार्थस्य ज्ञानं गृहीतशक्तिकस्य पुरुषस्य भवति; किन्तु वाचकशब्दस्याविद्यमाने वाच्यार्थस्य विद्यमानेऽपि चक्षुरिन्द्रियसन्निकर्षस्य सत्त्वेऽपि घटाद्यर्थस्य ज्ञानं नैव जायते। अतः शब्दे गृह्यत्वं ग्राहकत्वञ्चेति द्वे शक्ती दार्शनिकैः स्वीकृते।

स्वर्गापूर्वदेवतादिशब्दानामर्थाः प्रत्यक्षापरिच्छेद्यत्वादिदन्तया न ज्ञायन्ते; किन्त्वमरा निर्जरा इत्यादि शब्दैरिन्द्रियसन्निकर्षं विनाऽपि देवादिशब्दवाच्यार्था ज्ञायन्त एव। केवलं शब्देन शब्दार्थज्ञानं जायते। अत एव कोशेऽपि शक्तिग्रहोपायः प्रोक्तः। शब्दो न सर्वत्रार्थपरः, क्वचित् शब्दपरोऽपि दृश्यते, तद्यथा—"विधुर्विष्णौ चन्द्रमसि" ( अ० को० ३।३।९९ )। सर्वत्र शब्दपरोऽपि न, तद्यथा—"सत्कृत्यालङ्कृतां कन्यां यो ददाति स काकुदः" ( अ० को० ३।११४ )। किञ्च, शब्दशक्तिमहिम्ना परोऽक्षरब्रह्म शब्दवाच्यार्थोऽपि "सच्चिदानन्दं ब्रह्म" इत्यादिशब्दैस्तज्ज्ञानं जायत एव। शब्दप्रमाणेन परोक्षार्थस्य ज्ञानम्, मनननिदिध्यासादिना च मानसप्रत्यक्षमनुभूयतेऽतीन्द्रियार्थदर्शिभिस्तत्त्वज्ञैः। मानसप्रत्यक्षमपि मानसशब्दानुस्यूतमेव सञ्जायते। भौतिकस्यार्थस्य प्रतिपादको भौतिकः शब्दः। अतीन्द्रियस्य परोक्षस्य सच्चिदानन्दमयस्य ब्रह्मणः प्रकाशकोऽतीन्द्रियः परोक्षश्च

सच्चिदानन्दमयः शब्दः। सैव च परावागुच्यते। एवं परोक्षमपरोक्षञ्च सर्वं नामधेयान्वितम्।

प्रत्यक्षादिप्रमाणेन जायमानं ज्ञानं नैयायिकैश्चतुर्विधं स्वीकृतम्, तदनुसृत्य शाब्दबोधोऽपि चतुर्विधः सर्वस्य ज्ञानस्य शब्दानुविद्धत्वादिति वयं स्वीकुर्मः, इति चेत्, न काचित् क्षतिः, इष्टापत्तिरेव। तद्यथा—

(१) प्रत्यक्षात्मकः शाब्दबोधः, (२) अनुमित्यात्मकः शाब्दबोधः, (३) उपमित्यात्मकः शाब्दबोधः, (४) विशुद्धश्च शाब्दबोधः।

**(१) प्रत्यक्षात्मकः शाब्दबोधः**—इन्द्रियार्थसन्निकर्षजन्यबोधेन सह शब्दजन्यो बोधः प्रत्यक्षात्मकः शाब्दबोधः। यथा चक्षुरिन्द्रियस्य घटेन सह संयोगे सति "घटोऽयम्" इत्येवं मनसोच्चारितशब्देन घटपदार्थस्य ज्ञानं जायते।

**(२) अनुमियात्मकः शाब्दबोधः**—लिङ्गपरामर्शजन्यबोधेन सह शब्दजन्यो बोधोऽनुमित्यात्मकः शाब्दबोधः। तद्यथा—"पर्वतो वह्निमान् धूमात्" इत्यत्र दूराद् धूमस्य चक्षुषा सह संयोगे सति "पर्वतो वह्निमान्" इत्याकारकमनुमितिज्ञानं "पर्वतो वह्निमान्" इत्यानुपूर्वीकवाक्यघटकशब्देन, अथ च लिङ्गपरामर्शकवाक्येन जायते। गुडादिपदजन्यशाब्दबोधे गुडत्वाद्यतिरिक्तधर्मविशिष्टस्याप्यर्थस्य प्रकारतया भानं भवति; किन्तु तज्ज्ञानं न केवलं शब्दप्रमाणजन्यम्; अपि तु मानान्तरजन्यमपि। यथा गुडशब्दस्योच्चारणे कृते गुडत्वप्रकारकगुडविशेष्यकशाब्दबोधेन सह "गुडो मधुरः" इत्याकारकमपि यज्ज्ञानं जायते, तत् तु "गुडो मधुरः, ऐक्षवत्वात्" इत्येवमनुमानप्रमाणेन जायते। गुडस्य जिह्वया सह संयोगे "गुडो मधुरः" इति ज्ञानं तु प्रत्यक्षप्रमाणेन भवति। गुडपदार्थस्य चक्षुरिन्द्रियेण सह यद्वा गुडशब्दस्योच्चारणे कृते मधुरत्वप्रतीतिस्तु "गुडो मधुरः, ऐक्षवत्वात्" इत्यनुमानप्रमाणेन, यद्वा प्रत्यक्षप्रमाणजन्यपूर्वानुभवद्वारा जायते। पूर्वानुभवस्यापि ज्ञानं शब्दानुस्यूतमेव जायते। एवं चाक्षुषत्वाचरासनादिकमैन्द्रियं ज्ञानं शब्दानुस्यूतम्, तत्तदिन्द्रियजन्यज्ञानविषयीभूतार्थस्य तद्वाचकशब्देनैव बोधात्। एकप्रमाणेन जन्यो बोधोऽपरप्रमाणजन्यबोधेन ग्रस्तः।

**(३) उपमियात्मकः शाब्दबोधः**—पूर्वोक्तरीत्योपमानप्रमाणजन्योपमितिज्ञानविषयीभूतार्थस्यापि ज्ञानं तद्वाचकशब्देनैव जायते।

**(४) विशुद्धः शाब्दबोधः**—यस्मिंश्च शब्दजन्यबोधेऽर्थः प्रकारतया शब्दश्च विशेष्यतया स्वसत्तां भजते, स बोधो विशुद्धः शाब्दबोधः स्वीक्रियते। यथा घटमुच्चारय, गवित्ययमाह। क्वचित्तु शब्देन शब्दमात्रस्य बोधो भवति, यथा व्याकरणशास्त्रे टिसंज्ञया, उपधासंज्ञया च 'अत्' इत्यादिशब्दानां बोधः सञ्जायते। एतत् तथ्यम् "अचोऽन्त्यादि टि" (पा० सू० १।१।६४), "अलोऽन्त्यात् पूर्व उपधा" (पा० सू० १।१।६५) इत्यादिसूत्रेण

पुष्टं भवति। क्वचित् तु शब्देनार्थविशिष्टस्य शब्दस्य बोधो भवति। संज्ञाशब्दानामर्थविशिष्टाः शब्दाः संज्ञिनो भवन्ति। तद्यथा–"शेषो घ्यसखि" ( पा० सू० १।४।७ ) इत्यनेनार्थविशिष्टेकारोकारान्तहरिभान्वादिशब्दानां घिसंज्ञा क्रियते, घिसंज्ञया च तत्तच्छब्दानां बोधः सञ्जायते। अत एव भगवान् पाणिनिः स्वरूपमिति सूत्रे अशब्दसंज्ञा इत्याह। भगवान् भाष्यकारः पतञ्जलिरपि स्वं रूपमिति सूत्रं प्रत्याचक्षाण एतत्तथ्यं स्वीकृतवान्। वस्तुतस्तु आवेदादेरापुराणादेः सर्वत्राऽऽप्रोक्तशब्दप्रमाणेन जायमानः शब्दानुस्यूतो बोधो विशुद्धः शाब्दबोधः, तत्र बोधेऽर्थस्य गौणतया भासमानत्वात्।

तदित्थमनया रीत्या विचार्यमाणे सति कस्मिंश्चिद् बोधे शब्दः प्रकारतया, अर्थश्च विशेष्यतया भासते। प्रत्यक्षानुमानोपमानप्रमाणत्रयेण जायमाने बोधे शब्दः प्रकारतयाऽर्थश्च विशेष्यतया भासते। अनेन प्रमाणत्रयेण शब्दप्रकारकार्थविशेष्यको बोधः सञ्जायते। अत्र बोधे शब्दो गौणः, अर्थश्च प्रधानः। अतो नैयायिकैः प्रत्यक्षादिप्रमाणजन्यज्ञानस्य शब्दानुस्यूतत्वेऽपि शब्दप्रमाणजन्यत्वं नाङ्गीकुर्वन्ति, तत्र शब्दस्य गौणत्वात्। वेदादिग्रन्थेषु तदङ्गभूतेषु शास्त्रेष्वन्यत्रापि वार्तालापादिषु च बोधेऽर्थः प्रकारतया शब्दश्च विशेष्यतया भासते। अतोऽयं बोधः शब्दप्रमाणजन्यः, अर्थस्य गौणत्वात्। अत्रार्थप्रकारकशब्दविशेष्यको बोधः सञ्जायते। अर्थप्रकारकः शब्दविशेष्यकश्च बोधः शब्दप्रमाणजन्यः, न तु प्रत्यक्षादिप्रमाणजन्यः, अत्रार्थस्य गौणत्वात्। एवं शब्दस्य क्वचिज्ज्ञाने प्रकारतया क्वचिच्च विशेष्यतया प्रतीयमानत्वात् सर्वं ज्ञानं शब्दानुविद्धमिति शाब्दिकसिद्धान्तः सत्यतामाटीकते।

वस्तुतस्तु ज्ञाने प्रकारतया यद्वा विशेष्यतया भासमान उभयविधोऽपि शब्दः प्रमाणानामपि प्रमाणभूतः प्रकाशानामपि प्रकाशभूतः, प्रत्यक्षादिप्रमाणजन्यज्ञानस्यापि प्रकाशकः। अत आह श्रुतिर्भगवती—

"इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा योऽयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशस्तत्रैतत् सर्वमुपनिबद्धं यावत्स्थास्नु चरिष्णु च"।

अत्र शब्दाख्यः प्रकाशः "प्रकाशाप्रकाशयोरुभयोरपि प्रकाशयिता" इत्युक्तम्। प्रत्यक्षादिप्रमाणजन्यं ज्ञानं प्रकाशः, अर्थश्च अप्रकाशः, तयोः प्रकाशाप्रकाशयोः प्रकाशयिता, शब्दाख्यप्रकाशः स्वात्मानमपि प्रकाशयतीत्यतः स स्वप्रकाशः स्वप्रकाश्यश्च तस्य प्रकाशकः कश्चिदन्यो नास्तीत्यतः श्रीभर्तृहरिरपि वाक्यपदीयस्य ब्रह्मकाण्डे प्राह—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥ इति।



# कर्मकारकविमर्शः

श्रीश्रेयांशकुमारद्विवेदी

अनुसन्धाता; व्याकरणविभागस्य,

काशीहिन्दूविश्वविद्यालये

वाराणसी

❀❀❀

जनाः स्वभावविनिमयार्थं भाषायाः प्रयोगं कुर्वन्तीति विदितमेव विपश्चिताम्। भावविनिमयावसरेऽनेकविधानि वाक्यानि प्रयुज्यन्ते, तैस्तेषु प्रसङ्गेऽस्मिन् विचारणीयानीमानि वाक्यान्यत्र निर्दिश्यन्ते।

पयः पिबति, काष्ठं भस्म करोति, आदित्यं पश्यति, क्रूरमभिक्रुध्यति, अक्षान् दीव्यति, वैकुण्ठमधिशेते, ओदनं भुङ्क्ते, ग्रामं गच्छंस्तृणं स्पृशति, गां दोग्धि पयः, पितॄन् स्वर्गमगमयत्, कटं कारयतीत्यादिषु वाक्येषु पयः, भस्म, आदित्यम्, क्रूरम्, अक्षान्, वैकुण्ठम्, ओदनम्, तृणम्, पितॄन्, कटं चेत्येतानि कर्मसंज्ञानि भवन्तीति ज्ञायत एव शाब्दिकैः।

अत्रेदमाशङ्क्यते—एषु पदेषु कर्मसंज्ञायां कोऽपि भेदोऽस्ति, न वा। यद्यस्ति भेदस्तर्हि स कीदृशः ? कर्मसंज्ञायाः स्वरूपं च किमित्येतासां सर्वासामपि शङ्कानां समाधानं वैयाकरणैः स्वस्वग्रन्थेषु कृतं दृश्यते। अतस्तत्समाधानसमीक्षणधियाऽस्मिल्लेखलेखने प्रवर्ततेऽयं जनः।

आचार्यपाणिनिना स्वीयायामष्टाध्याय्यामेकषष्टिसूत्राणि कर्मसम्बन्धीनि प्रतिपादितानि। तेन पाणिनिना स्वीकृतं कर्मस्वरूपं परिज्ञायते। अतस्तेषु प्रतिपादितेषु सूत्रेषु कर्मविधायकसूत्राणामुल्लेखः क्रियते। '[1]क्रुधद्रुहोरुपसृष्टयोः कर्म, दिवः कर्म च[2], अधिशीङ्स्थासां कर्म[3], कर्तुरीप्सिततमं कर्म[4], तथायुक्तं चानीप्सितम्[5], अकथितं च[6], गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ[7], हृक्रोरन्यतरस्याम्[8], इति कर्मविधायकसूत्राणामुपरि विविधैर्वैयाकरणैर्बहुधा व्याख्या कृता वर्तते।

---

१. पा० सू० १।४।३८; २. तदेव—१।४।४३; ३. तदेव—१।४।४६।
४. तदेव—१।५।४९; ५. तदेव—१।४।५०; ६. तदेव—१-४-५१।
७. तदेव—१।४।५१; ८. तदेव—१।४।५३।

क्रियया कर्तुरीप्सिततममेव कर्म स्वीक्रियते। यत्र कर्मणः क्रियानिष्पत्तिः, संस्कारः, प्रतिपत्तिर्वा भवति, तत्र कर्म ईप्सितं भवति। अन्यत्र तु क्रिययैव प्रतीयमानं संदर्शनादि क्रियाया अपेक्षयेप्सितं भवति। ईप्सितेन सहानीप्सितमपि कर्म भवति। ईप्सिताद् भिन्नं सर्वमनोप्सितं भवति। अतोऽकथितमपि कर्मानीप्सितशब्देन ग्रहीतुं शक्यते।

आचार्यभर्तृहरिणा तावदीप्सितकर्मणस्त्रयो भेदाः प्रतिपादिताः सन्ति। यथा—

'निर्वर्त्यं च विकार्यं च प्राप्यञ्चेति त्रिधा मतम् ॥' इति।

अपि च कर्माण्यन्यानि चतुर्विधानि प्रतिपादितानि। यथा—

औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं　　　यद्यच्चाप्यन्यपूर्वकम् ॥

अनेन प्रकारेण सप्तधा कर्माणि जायन्त ईप्सितस्य भेदत्रयेषु निर्वर्त्य-विकार्ययो-र्विवेचनं महर्षिणा कात्यायनेन कृतम्। यथा—

"यस्य प्रकृतिः सदसद्वा भवेत्, यस्य प्रकृतिरभेदरूपेण आश्रिता न भवति तन्नि-र्वर्त्यं कर्मेति स्वीक्रियते।" अथवा यः असतो जायते तन्निर्वर्त्यं कर्मेति स्वीक्रियते, अथवा सत् सम्भवेऽपि जन्मना प्रतीयते तन्निर्वर्त्यं कर्मेति। वैशेषिकदर्शनानुसारम्— असतः सदित्यस्योत्पत्तिर्जायते; परन्तु सत्कार्यवादानुसारेण सतः सदुत्पत्तिर्जायते। उभावपि स्वरूपे जन्मना यस्याभिव्यक्तिर्जायते तन्निर्वर्त्यं कर्म। यथा हि—

"यस्योपादानकारणं नास्ति तन्निर्वर्त्यम्। यथा-संयोगं करोति सदप्युपादान-कारणं विवक्ष्यते, तन्निर्वर्त्यम्। यथा घटं करोति[1]"।

यदि प्रकृतिः सदसद्वा परिणामरूपे विवक्षिता भवति, तत्र विकार्यं कर्म भवति। विट्ठलमहोदयस्तु निर्वर्त्यविकार्यकर्मणः, असतो विकार्यकर्मणश्च सतः सम्बन्धं स्थापयति।

"तत्र निर्वर्त्यं यदसदेव जायते यथा 'घटं करोति' इति विकार्यं लब्धसत्ताक-मेवावस्थान्तरमापद्यते"[2]।

आभासस्योपगमो योग्यदेशे प्रकाशस्योपलब्धिः प्राप्यकर्मणो दर्शने साधिका भवति। अथवा प्रदीपादितोऽभिव्यक्तिर्जायते, अथवा सोढत्वबोधक्षमताप्रभृतीनि प्राप्यकर्मणः साधनानि सन्ति। इमानि दर्शनक्रियायाः कारणानि सन्ति। 'आदित्यं

---

१. व्याकरणमहाभाष्यप्रदीपे— ३।२।१।
२. प्रक्रियाकौमुद्याः प्रथमे भागे, पृ० ३०३।

पश्यति' इति वाक्याद् आदित्याभासः प्राप्यते दर्शनात्। यतो हि दृश्यते। अभिव्यक्तिरपि प्राप्यते प्रत्यक्षरूपेण च समुपलभ्यते। दर्शनक्रियया सह शक्तिमपि प्राप्तुं समर्थो यतो हि सहनशीलोऽस्ति। "निर्वर्त्यकर्मणि विकार्य-प्राप्यकर्मणो धर्माः स्वधर्माश्च भवन्ति, विकार्यकर्मणि प्राप्यकर्मणो धर्मः, स्वधर्मश्च भवति। प्राप्यकर्मणि स्वधर्ममात्रं भवति[1]"।

शेषश्रीकृष्णमहोदयस्तु ईप्सितानीप्सितौदासीन्यरूपेण प्राप्यादीनामेषां त्रयाणां निर्वर्त्यं विकार्यं प्राप्यञ्चेत्यादिरूपेण त्रिधा विभक्तवान्। अनेन प्रकारेण नवधा कर्माणि भवन्ति। अत्र चाऽकथितम्, अन्यपूर्वकञ्चादाय तावदेकादशधा कर्माणि जायन्ते—

"एवञ्चेप्सितादीनां त्रयाणां निर्वर्त्यादिभेदात् त्रित्वे नवविधत्वम्, अकथितान्यपूर्वकभेदाभ्यां सहैकादशत्वं प्रतिभाति[2]"।

अभिनवगुप्तास्तु विकार्यप्रभृति क्रमानुसारं कार्यपरिणामो धर्मपरिणामो वृत्तिपरिणामञ्चेति प्रकारेणोक्तवन्तः—"पूर्वं रूपं हि तिरोदधत् कश्चित् परिणामः काष्ठभस्मवत् स कार्यपरिणाम उच्यते। यस्त्वतिरोधत् स धर्मपरिणामः, यः सिद्धाकारतया भाति सुवर्णस्येव कुण्डलता, यस्तु अतिरोदधत् साध्याकारत्वेन गच्छति बुध्यते इति यथा स वृत्तिपरिणामः"[3]।

कर्मण इति विवेचने सदसदित्यनयोः परिणामश्च प्रसङ्गात् तदानीं दर्शनक्षेत्रेऽप्यस्य बहुधा वार्ता प्रचलिताऽऽसीत्। अपि चाचार्यभर्तृहरेः पाण्डित्यविरोधे केचन जना वितर्कितवन्तः। पुनरप्येकस्तर्को निर्दिश्यते—

"निर्वर्त्यं कारकं नैव क्रिया तस्य हि साधिका।
विकार्यमपि भावेन विरोधान्नैव कारकम्॥
प्राप्यत्वात् पूर्विकावस्था न सा कर्म बुधैर्मता।
प्राप्यावस्था क्रिया साध्या साध्यत्वात् साधनं नहि[4]"॥

विकार्यं कर्म द्विधा विभाज्यते, प्रकृत्युच्छेदेन सम्भूतं प्रथमम्, गुणान्तरोत्पत्त्या सम्भूतञ्च द्वितीयम्। प्रकृत्युच्छेदादभिप्रायस्तु स्वप्रकृतिविनाशात् सर्वात्मना विनाशाद्वा वर्तते। यतो हि—'काष्ठं भस्म करोति' हेलाराजमतानुसारमिदं वाक्यं निर्वर्त्यस्याप्युदाहरणं वर्तते। यदि प्रकृत्यविवक्षा स्यात्; परन्तु प्रकृत्या विवक्षायां त्विदमुदाहरणं विकार्यस्यैवास्ति—

---

१. शृङ्गारप्रकाशे, पृ० १४७, भागे ३; २. पदचन्द्रिकाविवरणहस्तलेखः, पृ० १९१।
३. ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, भाग १, पृ० १४५।
४. पुरुषोत्तमदेवस्य कारकचक्र उद्धृतम्, पृ० १०६।

"काष्ठानि भस्म करोति, पूर्ववत् प्रकृतिविकारयोः क्रियासम्बन्धो योज्यः, पूर्वेण तु लक्षणेन निर्वर्त्यमेतत् कर्म प्रकृतेरविवक्षायां विवक्षायां तु विकार्यम्[1]"। उक्तं च हरिणा—

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥

'काष्ठानि दहति' इत्यत्र विकार्यं सामर्थ्यगम्यमस्ति। यदि प्रकृतिः स्वस्वरूपं न जहाति तथा कस्यापि गुणस्य सन्निधानाद् विकृतवतो न प्रतिभाति अतस्तस्योपलक्षित-मपि कर्म विकार्यं भवति। यथा-'सुवर्णकुण्डलं करोति'। यद्यपि सांख्यमतानुसारमस्मिन् वाक्येऽपि विकार्यमपूर्वमस्ति, तदपि प्रत्यभिज्ञानात्। लोके तदैक्यरूपेण मत्वा गुणान्तर-मात्रस्य भेदः स्वीक्रियते। अतो गुणान्तराधानाद् यत्रान्यद् व्यपदेशः स्यात्, तत्रापि विकार्यं कर्म भवति।

निर्वर्त्य-विकार्ययोः सम्बन्धिनोर्यत्र प्रत्यक्षानुमानरूपेण न प्रतीतिः, तत्र प्राप्यकर्म भवति। यथा—'आदित्यं पश्यति' इत्यस्माद् वाक्यादादित्ये दर्शनक्रियाया कोऽपि विशेषो विकारो वा प्रत्यक्षानुमानाभ्यां न प्रतिभाति।

केषाञ्चिन्मते प्राप्यकर्मैवाभावो यतो हि क्रियाकृतविशेषस्तु सर्वत्रोपलभ्यते, कुत्रचित् सूक्ष्मरूपेण कुत्रचिच्च स्थूलरूपेण दृश्यते, इतो विरुद्धः कैयटमहोदयस्य विचारोऽस्ति। प्राप्यत्वं तु सर्वत्र कर्मणि क्रियातः प्राप्यमाणत्वात्। केवलमवान्तर-विवक्षया कर्माणि त्रिधा विभक्तानि। "तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्ति क्रियया प्राप्य-माणत्वात्, अवान्तरविवक्षायां तु त्रैविध्यमुच्यते"[2]।

प्राप्यमाणकर्मणः क्रियासिद्धावत्र निर्दिष्टः साधनभावः स्वीक्रियते—

आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः[3]॥

अस्यायमाशयो यदुल्लिखिताः कर्मभेदाः कारकोपाधिं प्राप्तुं नार्हाः। यतो हि निर्वर्त्यमसतो जायते, स स्वयमेव क्रियाकृतः क्रियातः पूर्वं तस्य सत्ता नासीदिति विकार्यं प्राप्यञ्च क्रियायाः साध्यानि। अतस्ते साधनानि भवितुं नार्हन्ति। पुरुषोत्तमदेवानु-सारमस्याक्षेपस्योत्तरमस्ति यन्निर्वर्त्यादिषु स्वगतोऽपि व्यापारो भवति तद्व्यापारस्या-धारेण कर्मापि कारकं स्वीक्रियते।

विकार्यकर्मणि धातूपात्तफलाश्रयताया अभावस्य शङ्काप्युत्थापिता; परन्तु भट्टोजिदीक्षितमहोदयैरस्याः समाधानं प्रकृतिविकृतावभेदविवक्षाया आधारेण फलाश्रयं

---

१. वाक्यपदीये साधनसमुद्देशे हेलाराजीयटीकायां कारिका—५०।
२. व्याकरणमहाभाष्यप्रदीपे—३।२।१;        ३ वाक्यपदीये—३।५३।

मत्वा कृतम् । अथवा "काष्ठानि विकुर्वन् भस्मोत्पादयति" अस्मिन् रूपेऽर्थं विधायाऽऽश्रयता सिद्ध्यति[1] ।

ईप्सितकर्मण उदाहरणं 'पयः पिबति', अनीप्सितकर्मणश्च 'विषं भक्षयति' इति। हेलाराजमतानुसारेण 'ग्रामं गच्छन् वृक्षमूलं स्पृशति' इति स्यात्। औदासीन्येन यत्प्राप्यम्, यथा—

"ग्रामं गन्तुर्वृक्षमूलादि"[२]; परन्तु महाभाष्य-काशिकाप्रभृत्याधारेणेदमुदाहरणमनीप्सितस्य भवति । वस्तुतोऽस्योदाहरणम्—

'पन्थानं गच्छति', 'नदीं तरति', 'इदमास्थित' इत्यादि। अस्येप्सितानीप्सितो भेदोऽस्मिन् रूपे कृतोऽस्ति यदास्थिते क्रियाया द्वे रूपे भवतः। संज्ञान्तरेण कर्मणोऽभिप्रायोऽकथितकर्मतो वर्तते। अकथितकर्म च संस्कृतव्याकरणे परिगणितम्। अन्यपूर्वकस्य चोदाहरणम्—'अक्षान् दीव्यति' इत्यस्ति।

एवं चाष्टाध्यायी-महाभाष्य-प्रदीपोद्द्योत-वाक्यपदीय-शृङ्गारप्रकाशादिग्रन्थदृशा कश्मीरशैवदर्शनानुसारेण पुरुषोत्तमदेवकारकचक्रदिशा च कर्मणो विषये कर्मणो भेदादिविषये च विचारितमिति ।



१. शब्दकौस्तुभे—१।४।४९ ।

२. वाक्यपदीये सम्बन्धसमुद्देशे हेलाराजीयटीकायाम्, कारिका–४६ ।

# रसदृष्टिर्योगदृष्टिश्च[1]

**श्रीशिवजी-उपाध्यायः**

**उपाचार्यः, साहित्य-संस्कृतिसंकायस्य,**

**सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

**वाराणसी**

❃ ❃ ❃

**संवित्समुन्मिषदलौकिकतत्त्वसत्त्वा-**
**दात्मानमेव परमात्मदृशा समीक्ष्य ।**
**पश्यन्ति काश्चन पराञ्चिदुदञ्चदन्तः-**
**स्फूर्तिं रसज्ञमतयो यतयोऽभिवन्द्याः ॥**

"पुण्यवन्तः प्रमिण्वन्ति योगिवद् रससन्ततिम्" इति वचनाद् रसतत्त्वविदः सचेतसो योगिभिः सह समीकृताः सन्ति। प्राक्तनेदानीन्तनपुण्यशालिनः केऽपि ते तादृशरसानुभूतिस्फूर्तिमादधाना साधारणेभ्यो विशिष्यन्ते। किञ्च, तद्वैशिष्ट्यं किं वा तेषां योगिवत्त्वम् ? का च तत्र दृष्टिरिति विवेचयितुं पूर्वं रसस्तदास्वाद प्रकारश्च प्रस्तोतव्य इत्याकलय्य तावदुच्यते—

**रस्यमानतया स्वान्ते समूहालम्बनात्मना ।**
**साधारण्येन रत्यादेरास्वादो रस इष्यते ॥ १ ॥**

रस्येति। रस्यत इति रसः, रस्यमानता तदास्वादात्मिका वृत्तिः, सा च समूहालम्बनात्मना विभावादिभिः सह सम्भूय स्वान्तेऽन्तःकरणे साधारण्येन साधारणीकरणाख्यलोकोत्तरव्यापारेण इत्यादेः स्थायिन अस्वादो रस इष्यते। न केवलं स्थाय्यादे रत्यादेर्न वा विभावादेर्नापि केवलाया वृत्तेर्वा तादृशास्वादात्मकरसत्वं संगच्छते, संभावितुं युज्यते वा, प्रत्युत विभावादिसमूहालम्बनाकारेण साधारणीकृतलोकोत्तरव्यापारेण सहृदयहृदयान्तर्निष्ठरत्यादिस्थायिन आस्वादरूपो रस इत्यास्थीयते तद्विद्भिः।

---

१. निबन्धोऽयं विश्वविद्यालयीय-शास्त्रचर्चागोष्ठ्यां ( १६-१२-१९९१ दिनाङ्के ) प्रथम-व्याख्यानत्वे पठितः।

स एष आस्वादः किंरूप इति पुनरुच्यते—

**आस्वादस्य चिदात्मत्वे रत्यादेस्तत्प्रकारता।**
**रत्याद्यात्मतया भाने विशेष्यत्वं तदात्मकम् ॥ २ ॥**

**आस्वादेति।** आस्वादः सोऽयं चिन्मयः प्रकाशानन्दमयसंविद् विश्रान्तिरूपत्वात् तस्य चिदात्मत्वे प्रकाशात्मज्ञानरूपत्वेऽङ्गीकृते रत्यादेः स्थायिनस्तत्प्रकारता आस्वादनिष्ठविशेषणता रत्यादिविशिष्टास्वादवत्तया प्रतिपद्यते। किञ्च, रत्याद्यात्मतया चिद्विशिष्टरत्यादिरसत्वाङ्गीकारेण तद्भाने तदास्वादप्रकाशे तदात्मकं रत्यादिनिष्ठं विशेष्यत्वं चिद्गत-प्रकारीभवनत्वं सम्पद्यते, उभयत्राप्यास्वादस्य निष्प्रत्यूहत्वात्तदात्मनो रसस्यानुभूतौ बाधाभाव इत्यवसेयम्।

कथं बाधाभावो रसानुभूतावित्युच्यते—

**रत्याद्यास्वादचिद्रूपप्रकाशत्रितयात्मके।**
**प्रकारत्वं विशेष्यत्वं द्वयमप्यत्र लीयते ॥ ३ ॥**

**रत्यादीति।** रत्यादिरास्वादश्चिद्रूपः प्रकाशश्चेति त्रितयमात्मा स्वरूपं यस्य तादृशेऽत्र रसात्मके भाने तन्मयीभवने द्वयमपि तदुभयनिष्ठप्रकारत्वं विशेष्यत्वं वा लीयते लयमुपगच्छति प्रमातुः सचेतसः स्वाकाराभिन्नतया तादृशलोकोत्तरास्वादस्य जायमानत्वादुक्तत्रिपुटीलयो भवतीति बोध्यम्। रत्यादिरास्वादश्चिद्रूपप्रकाशश्चेति त्रयस्य तदात्मकत्वादिति भावः।

प्रकारान्तरेण यदुक्तं तदेव द्रढयितुमुच्यते—

**आस्वादस्य प्रकाशाख्यरूपत्वादुभयोरपि।**
**तत्त्वेनैवोपपत्तिः स्याद् रत्यादेस्तच्चितेरपि ॥ ४ ॥**

**आस्वादेति।** आस्वादश्च प्रकाशश्चेत्युभयस्यैकरूपत्वम्, रसस्य प्रकाशानन्दमयत्वात्, तथैव रत्यादेश्चितेरपि तत्त्वेनैवोपपत्तिः स्यात्, रत्यादिचिन्मयीभावस्यापि तदात्मत्वेनोपपन्नत्वान्नैतत्पृथग्भावः पर्यवस्यतीति, प्रत्युत "सत्त्वोद्रेकादखण्डस्य प्रकाशानन्दचिन्मय" इत्युक्तेस्तादृरूप्येण तदुपपत्तिरित्याकूतम्।

तत्कथं भेदप्रतीतिरित्युच्यते—

**आख्याने तद्भिदाख्याता तद्विदां मतभेदतः।**
**आस्वादे तदपार्थक्यं प्रमाता प्रतिपद्यते ॥ ५ ॥**

**आख्यान इति।** आख्याने नाममात्रोच्चारणे तद्भिदाख्याता रत्यादिभेदाख्यानं विशेष्यविशेषणभावादिसम्बन्धनिरूपणं तद्विदां रससिद्धान्तप्रतिष्ठापनपरमाचार्याणां मतभेदतो भिन्नमतवादस्थापनार्थं शास्त्रसंवर्धनपरं तत्सर्वं प्रत्यवसेयम्। वस्तुतस्त्वास्वादे आनन्दमयसंविद्रूपे प्रमाता तदपार्थक्यं रत्यादिसमूहालम्बनतया स्वाभिन्नतया च तद्भाने तात्त्विकमभेदमेव प्रतिपद्यते, अन्यथा लोकोत्तरत्वानुपपत्तेरित्याशयः।

न केवलं रत्यादिवस्तूनां प्रत्युत प्रमात्रादीनामपि तत्र त्रिपुटीलय इत्युच्यते—

**प्रमातुः प्रमितेः किञ्च प्रमेयस्य रसात्मनि ।**
**त्रिपुटीविलये जाते संविदाह्लादरूपिणी ॥ ६ ॥**

**प्रमातुरिति ।** रत्यादि-विभावादि-चिद्रूपप्रकाशाख्यत्रिपुटीव प्रमातृ-प्रमिति-प्रमेयरूपाऽपि तदितरा त्रिपुटी प्रकटीभवति, साऽपि रसात्मनि संविदानन्दमयास्वादे विलयं प्रयाति, प्रमातृत्वादिबोधावगमे तद्बोधस्यानुपपन्नत्वात् । तादृशे प्रमातृत्व-रूपत्रिपुटीविलये सत्येव आह्लादरूपिणी संविद् रसानन्दमात्रपरिच्छिन्ना चिद्रूपाऽनु-भूतिः परिस्फुरति, "प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते" इत्युक्तेः ।

इदानीं रसात्मपरात्मनोर्भेद उच्यते—

**केवलस्तु रसः साक्षात्परात्मोपनिषन्मतः ।**
**विभावाद्यनुविद्धोऽसावानन्दाकारमश्नुते ॥ ७ ॥**

**केवल इति ।** केवलो निर्विशिष्टो विभावाद्यनवच्छिन्नो रसः साक्षान्निर्विरोधेन श्रुतिप्रामाण्येनोपनिषन्मतः "रसो वै सः" इत्युक्तवचनात् परात्मा परमेश्वरः पर-ब्रह्मेत्याख्यो निरूपितः, पुनश्च तस्यैव परमात्मन आनन्दाकारतया विभावाद्यनुविद्धत्वे ब्रह्मानन्दसहोदरत्वेन काव्यरसत्वं प्रसिध्यतीति प्रत्येतव्यम्, "रसं ह्येवायं लब्ध्वाऽऽनन्दी-भवति" इति श्रुत्यन्तरेण तन्निर्देशादिदं स्पष्टं पुष्टीभवति । ब्रह्मानन्दो रसानन्दश्च निर्विशेषसविशेषभावेन श्रुतिप्रतिपादितः प्रतितिष्ठतीति गूढाशयो बोध्यः ।

परात्माख्यमेव तत्त्वं रस इत्युच्यते—

**तदेवैकं परात्माख्यं तत्त्वं लब्ध्वा परां रतिम् ।**
**काव्ये सम्भावयन् याति प्रमाताऽऽनन्दरूपताम् ॥ ८ ॥**

**तदिति ।** तदेवोपनिषत्प्रमाणप्रतिपन्नमेकमद्वयं परात्माख्यं निर्गुणं निर्विशिष्टं परब्रह्माख्यं तत्त्वं परां रतिम् आनन्दात्मिकामलौकिकीं वृत्तिं लब्ध्वा तदाकारेण परिणतः सन् विभावादिविशिष्टकाव्ये रसात्मत्वेन तिष्ठति । तदेव सम्भावयन् सम्यग् भावनाविषयीकुर्वन् पुनः पुनरनुसन्दधानः प्रमाता काव्यमर्मवित्समेतः आनन्दरूपतां तन्मयतां याति, तादृशतत्त्वानुस्यूतरत्यादिरूपरसाख्यनिर्वृतिमातनोतीति भावः ।

अथ योगिभिः परमात्मनः साक्षात्कारः किम्प्रकारकः क्रियमाण इत्युच्यते—

**विभावाद्यनवच्छिन्नरसस्य परमात्मनः ।**
**साक्षात्कारः समाधिस्थैर्योगिभिः संविधीयते ॥ ९ ॥**

**विभावादीति ।** तैर्विभावादिभिरनवच्छिन्नो निर्विशिष्टो निरुपाधिको यो

रसस्तस्य परमात्मरूपत्वात्तादृशनिर्गुणब्रह्मणो रसप्रख्यस्य समाधिस्थैर्निर्विकल्पकध्याननिष्ठैर्योगिभिः साक्षात्कारः संविधीयते तदाकारवृत्त्या तन्मयीभावः प्रणिधीयते, अहं ब्रह्मास्मीति बोधस्य तथात्वेन श्रुत्युक्तत्वादिति ।

तत्र साधनानां पार्थक्यमित्युच्यते—

**तत्तदौपयिकं दृष्टं साधनं तत्पृथङ्मतम् ।**
**साध्यमेकं रसप्रख्यमुपाधित्वेन भिद्यते ।। १० ।।**

**तदिति** । तत्र तदौपयिकं तदुभयोपायसम्बन्धि दृष्टं प्रत्यक्षीकृतं साधनं धारणाध्यानादिकं विभावादिकं च प्रसिद्धं सत् पृथङ्मतम्, स्वसाध्यानुकूलत्वात्तेषां पार्थक्यस्योचितत्वान्न तत्रैकरूपत्वं युज्यते । परं रसप्रख्यं श्रुत्युक्तरूपं साध्यं लक्ष्यं तदेकं केवलमुपाधित्वेन साद्गुण्यनैर्गुण्यरूपेण भिद्यते । निर्गुणत्वेऽपि ब्रह्मणो रसप्रख्यस्योपाधित्वेन श्रुतौ सगुणत्वाङ्गीकारादिति बोध्यम् ।

उभयत्र साधर्म्यं तन्मूलकमित्युच्यते—

**ब्रह्मानन्दस्य सोदर्यः काव्यानन्दो रसः स्मृतः ।**
**तत्र तन्मात्रमूलत्वात्साधर्म्यं परिकल्पितम् ।। ११ ।।**

**ब्रह्मेति** । ब्रह्मानन्दस्य काव्यानन्दः सोऽयं रसः सोदर्यः समस्रोतःसम्भवात्स्मृतः सिद्धान्तितः, सर्वभावानां मूलकारणतया तस्यैव परमात्मनः श्रुतिसम्मतत्वादिति भावः । तेन तस्य साधर्म्यं तन्मात्रमूलकं परिकल्पितं भवति । यतः "इमानि भूतानि जायन्ते" इत्यादि श्रुतिप्रामाण्यान्न मूलगतं वैधर्म्यं वक्तुं शक्यं तथात्वे कारणकार्यविपर्ययेण मूलवस्तुनोऽपि विप्लवादिति भावः ।

कश्चायं योगिनां ब्रह्मानन्द इत्युच्यते—

**धारणोपासनाध्यानाद्यसाधारणसाधनैः ।**
**ब्रह्मानन्दो हि तादात्म्याद्योगिनां चिन्मयात्मकः ।। १२ ।।**

**धारणेति** । धारणोपासनाध्यानादीनि धार्यमाणोपास्यमानधीयमानवृत्तिरूपाणि । तानि च लोकापेक्षया असाधारणानि योगदर्शनदिशोक्तानि तादृशैस्तैरसाधारणैः साधनैरुपायैस्तादात्म्यात्सम्बन्धादभेदात्मकान्न तु व्याकरणस्मृतिसम्मतभेदाभेदात्मकं तादात्म्यमत्र बोध्यम्, तथात्वे नियतवृत्तिव्यवच्छेदादिति भावः । तेन यथोक्ततादात्म्यादभेदरूपादेव योगिनां युक्ततमयुक्तात्मनां महात्मनां न तु सामान्यसाधकानामिति भावः ।

"योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" ।।

इति भगवदुक्तेस्तादृशानामेव महात्म-ब्रह्मविद्वरिष्ठानां चिन्मयात्मको ब्रह्मानन्दो जायते, चिद्रूपपरमात्मप्रकाशस्य आनन्दो वै ब्रह्मेत्याकारस्य तेष्वेवाभिमतत्वादिति भावः।

रसानन्दश्च काव्यगतस्तद्भिन्न इत्युच्यते--

**रसानन्दश्च रत्यादेर्विभावाद्यनुयोगतः ।**
**साधारण्यादभिव्यक्तश्चिद्रूपोऽपि सचेतसाम् ॥ १३ ॥**

**रसेति ।** विभावाद्यनुयोगतः संयोगाज्जायमानो रत्यादेर्योऽयं रसानन्दः, स हि साधारण्यात्साधारणीकरणात्मना व्यापारेणाभिव्यक्तः चिद्रूपः सन्नपि सचेतसां प्रतीतिपथं प्रयाति, साधारणीकृतैर्विभावादिभिर्हेतुभिश्चिदात्मकोऽभिव्यक्तो रत्यादिरेव रसानन्दपदवीमुपेतः सहृदयहृदये प्रतीयत इति साधारण्यासाधारण्यभावेनोभयोर्भेदः पर्यवस्यति। तस्य च साधनमात्रनिष्ठत्वाद् वस्तुतत्त्वमनाविलमित्याकलनीयम्।

सम्प्रति साम्यवैषम्ये कीदृश इत्युच्यते--

**लोकोत्तरतया भानं चिन्मयत्वेन च द्वयोः ।**
**साम्यमेवास्ति वैषम्यं स्वालक्षण्यप्रभेदतः ॥ १४ ॥**

**लोकेति ।** लोकोत्तरतया चिन्मयत्वेन च यद् द्वयोर्ब्रह्मानन्द-रसानन्दयोर्भानं भवति, तेन तत्र साम्यमेवोभयत्र तिष्ठति, लोकोत्तरत्वचिन्मयत्वयोरुभयत्रैकरूपत्वेन विद्यमानत्वात्। किञ्च, वैषम्यं स्वालक्षण्यप्रभेदतः प्रभवति, स्वलक्षणगतप्रभेदस्य वैषम्यहेतुकत्वादिति भावः। तस्यापि लक्षणमात्रगतत्वेन लक्ष्यस्य तेनासंसृष्टत्वं बोध्यम्। वस्तुतस्तु निषिध्यमाननिखिललक्षणानां तत्र निर्गुणे ब्रह्मणि निषेधमुखेनैव प्रसक्तत्वात्, रसे चानुभवदशायां तद्वैयर्थ्यादिति तात्पर्यं बोध्यम्। तस्यात्मलक्षणमात्रनिष्ठस्तदुभयोः प्रभेद इत्यभिप्रायः।

अपि च फलमप्युभयोः सममित्युच्यते--

**फलमप्युभयोद्दिष्टं तन्मयीभवनं समम् ।**
**तत्क्षणस्थायितैकत्रापरत्र चिरसंस्थितिः ॥ १५ ॥**

**फलमिति ।** उभयोद्दिष्टं तदुद्देश्यतया निर्दिष्टं तन्मयीभवनं ताद्रूप्यप्रपत्तिरूपं फलं प्रयोजनमपि समं साम्येन परिकल्पितं भवति, तादात्म्येन लोकोत्तरसुखावाप्तिरेव ब्रह्मानन्दरसानन्दयोर्मुख्यं प्रयोजनं परिकल्प्यते; परन्तु तत्रैकत्र रसानन्दे तत्क्षणस्थायिता रसानुभूतिसमकालमेव तन्मयीभवनरूपफलस्य स्थायित्वं भवति, परमपरत्र ब्रह्मानन्दे तस्य ( फलस्य यथोक्तस्य ) चिरसंस्थितिः चिरकालावस्थानं जीवन्मुक्तिसुखास्पदं जनिमृतिनिर्मुक्तमनन्तनिर्वृतिप्रतिपन्नं सञ्जायत इत्यनयोरुभयोः कालिकफलावाप्तिभेदः पर्यवसीयते।

अनेकजन्मोपार्जितवासनाया आवश्यकत्वमुभयत्र समानमित्युच्यते –

**वासनाऽनेकजन्मोद्यत्संस्काराख्या हि तादृशी।**
**भावनैकीकृतं तत्त्वं निरुपाख्यं प्रकाशते ॥ १६ ॥**

**वासनेति।** वासना ह्यनेकेषां जन्मनामुदीयमानसंस्काररूपा तादृशी समानैव सोभयत्र पर्यवतिष्ठते। संस्काराख्यवासनारूपभावनयाऽनुसन्धानात्मकवृत्त्या एकीकृतमभेदेनात्मसात्कृतं निरुपाख्यं समग्राख्योपाख्यधर्मशून्यमानन्दमात्रपरिच्छिन्नं तत्त्वं ब्रह्मात्मकं रसात्मकमित्युभयं प्रकाशते। तस्य तद्विदामन्तःप्रकाशस्फूर्तिरूपत्वादिति भावः। सत्यपि साधनादीनां भेदे प्रकाशानन्द-संविदाकारतया तयोर्भेदो व्यपगच्छतीति बोध्यम्।

भावनानुगतसमाधिभेदः कीदृगित्युच्यते—

**ध्यानध्येयानुयोगेन वृत्तिमच्चित्तभासनात्।**
**सम्प्रज्ञातो विभावादिपरामर्शे वितन्यते ॥ १७ ॥**

**ध्यानेति।** ध्यानं भावनात्मकमनुसन्धीयमानवृत्त्याकारं चेति, ध्येयं लक्ष्यं रसवस्तु तदनुयोगेन संसर्गेण तदाकारवृत्तिमच्चित्ते मुहुर्मुहुर्भासनात् प्रकाशनाद्धेतोर्विभावादिपरामर्शे विभावादिकं परामृश्यैव रसानुभूतिप्रतीतेः सत्त्वात्तत्र सम्प्रज्ञातः सविकल्पकः समाधिर्वितन्यते सहृदयैरिति समाधिभेदस्तयोर्व्यवसीयते, रसानुभवस्य विभावादिपरामर्शपूर्वकत्वादेव प्रतिपत्तेरिति भावः।

कादाचित्कोऽसम्प्रज्ञातोऽप्यत्र सम्भवतीत्युच्यते--

**कदाचिच्चिन्मयीभावे तदाकारे प्रमातरि।**
**असम्प्रज्ञातताऽप्येषा जायते तत्क्षणोद्भवा ॥ १८ ॥**

**कदाचिदिति।** कदाचित् कस्मिंश्चिद् विलक्षणे क्षणे निःशेषविगलितवेद्यान्तरे तदाकारे रसोऽहमित्याकारेण तन्मयीभावे प्रमातरि सचेतसि भवति सति तद्विशिष्टकालसम्भूता तादृशक्षणमात्रस्थायिन्यसम्प्रज्ञातताऽप्येषा जायते, विभावादिसमूहालम्बनात्मन्यपि रसानुभवे तदाकारप्रतिपत्तौ सचेतसोऽप्यसम्प्रज्ञाततताया निर्बाधादुपपत्तिर्भवतीति वक्तुं युक्तमेवेति बोध्यम्।

सत्यपि समाने भाने कालादिकृतभेद इत्युच्यते—

**उभयत्रोभयं भानं समानं भवदांशिकम्।**
**अन्योन्यं भिद्यते भूयः कालस्थित्यादिपर्ययात् ॥ १९ ॥**

**उभयत्रेति।** उभयत्र ब्रह्मानन्दे रसानन्दे चोभयविधं भानं यदुक्तं तदांशिकं क्वचिदंशे समानं भवदपि कालस्थितिदेशव्यक्तिविपर्ययादन्योन्यं भूयो भिद्यते।

कालिको दैशिको वैयक्तिकः स्थितिजन्यश्च विपर्ययस्तदन्योन्यगतभूयोभेदहेतुर्भवतीति भानसाम्येऽपि तत्प्रकारा बहुविधा व्यवस्थाप्यन्ते, एतेऽपि नानाकारा भेदाः कालादिकृताः, न तात्त्विकाः, न वा तन्निष्ठास्तिष्ठन्तीति बोध्यम् ।

केन साधर्म्यं प्रमातुः सहृदयस्येत्युच्यते—

**युञ्जानयोगिसाधर्म्यं प्रमातुः परिकल्प्यते ।**
**रसात्मानुभवे भूम्ना भावनोल्लासदर्शनात् ।। २० ।।**

**युञ्जानेति ।** युक्तयुञ्जानभेदात् परिमितापरिमितसमाधिसन्धानाद् योगिनां द्वैविध्यम्, तत्र युञ्जानाः परिमितसमाधिमन्तो योगिनस्तेषां साधर्म्यं सादृश्यमूलकं प्रमातुः सचेतसः परिकल्पयितुं शक्यते । यतश्च रसात्मानुभवे रसानुरूपानुभूतिदशायां भूम्ना पुनः पुनर्भूयसा भावनोल्लासदर्शनाद् भावनाया वृत्तेरुच्चावचप्रकर्षापकर्ष-प्रतीतेस्तादृशं साधर्म्यं युज्यते, परमात्मानुभूतौ युञ्जानयोगिनोऽपि तादृशोत्कर्षाप-कर्षदर्शनादिति भावः ।

उक्तार्थं दृढीकर्तुं पुनरिदमुच्यते—

**परमात्मसतत्त्वेन साम्यमानन्दसंविदः ।**
**सम्भवत्साधनाभ्यासाद्यध्वना भेददर्शनम् ।। २१ ।।**

**परमात्मेति ।** परमात्मसतत्त्वेन परब्रह्मपरतत्त्वसादृश्येनांशांशिभावसम्बन्धा-त्तत्सोदर्यसाहचर्येणेत्यर्थो बोध्यः । तेन चानन्दसंविदः साम्यं समसत्ताकत्वेन साधर्म्यं भवतीति शेषः । पुनश्चात्र सम्भवत्साधनाभ्यासाद्यध्वना सम्भाव्यमानधारणाध्यानादि-साधनानां तदभ्यस्यमानमार्गेण पृथक् पृथगुपात्तेन भेददर्शनं रसदृष्टिर्योगदृष्टिश्चेति तदन्तर्गतभेदाध्यवसानं जायत इत्युक्तार्थान्तरं प्रकारान्तरेण बोध्यम् ।

तत्सादृश्ये तद्भिदाख्यानं भवतीत्युच्यते—

**सत्त्वोद्रेकादखण्डत्वं स्वप्रकाशत्वमप्यथ ।**
**आनन्दचिन्मयत्वादितत्सादृश्येऽपि तद्भिदा ।। २२ ।।**

**सत्त्वेति ।** सत्त्वोद्रेकाद् रजस्तमस्यभिभूय सत्त्वमात्रोदयादखण्डत्वं पूर्णत्वा-कारेण खण्डत्वाभावः, अपि च स्वप्रकाशत्वं सर्वप्रकाशकत्वशक्त्या तस्य स्वेतरप्रकाशना-सम्भवात्, "तस्य भासा सर्वमिदं विभाति" इति श्रुत्युक्तेः । अथ चानन्दचिन्मयत्वादिना धर्मेण तत्सादृश्येऽपि तदुभयसाम्ये सत्यपि तद्भिदाऽऽख्याता, शास्त्रकृद्भिः साधना-दिभिः पृथग् व्यवहारार्थमिति तात्पर्यं पर्यवसेयम् ।

प्रकारान्तरेणावेद्यान्तरत्वेऽपि तयोर्भेद इत्युच्यते--

**अवेद्यान्तरतैकत्र निरोधाद् वृत्तिवर्जनात् ।**
**परमावर्जनाद्धेतोः साधारण्याच्च जातुचित् ॥ २३ ॥**

**अवेद्येति ।** एकत्र खलु ब्रह्मानन्दमययोगदृष्टौ या ह्यवेद्यान्तरता प्रोक्ता विगलितवेद्यान्तरत्वरूपा स्वावस्थायाम्, सा निरोधात्सम्पूर्णभावान्तरनिरोधेन वृत्तिवर्जनात्तदखण्डवृत्तीतरवृत्तिनिषेधात् सम्भवति, "योगश्चित्तवृत्तिनिरोधः" (यो० द० १।२) इति लक्षणस्योक्तत्वात् । तद्व्यतिरिक्तं परत्र रसानन्दमय्यां दृष्टौ ललितोचितकाव्यभावैरावर्जनात्तदाकर्षणेन जातुचित् तद्भावनावस्थायां कादाचित्कतया जातायां तेषां भावानां साधारण्यादुपपन्नत्वेन अवेद्यान्तरता विभावादिसामूहिकरसभावेतरवस्तुवेद्यत्वाभावरूपा भवतीत्युभयोरवेद्यान्तरत्वेऽपि भेदस्याख्यानाद् दृष्टिद्वयभेदोऽभ्युपेतव्यः ।

सम्प्रति निर्विकल्पकसमाध्यनुभूतिः कीदृशीति पुनरुच्यते--

**वृत्तिच्छेदादविच्छिन्नचिदाकारतया परा ।**
**परात्मानुभवस्फूर्तिः समाधौ निर्विकल्पके ॥ २४ ॥**

**वृत्तीति ।** वृत्तयो लौकिक्यः पारलौकिक्यश्च नानाकारास्तासां सर्वथा छेदादभावादविच्छिन्नचिदाकारतया निर्बाधचिन्मयानन्दरूपत्वेन तन्मात्रपरिच्छिन्नपरमात्मभावेनेति भावः । तादृशी परात्मानुभवस्फूर्तिः केवलस्फुरणप्रतिभानलक्षणा निर्विकल्पके नामरूपजात्यादिरहिते समाधौ सिद्धमहात्मनां योगिनां भवतीति शेषः । "भिद्यते हृदयग्रन्थिः....." इत्यादि श्रुत्युक्तेः ।

इदानीं सविकल्पकसमाध्यनुभूतिः कीदृशीत्युच्यते—

**कदाचित्तद्व्यवच्छेदात्कदाचिदनुयोजनात् ।**
**चित्परामर्शमात्रेण सविकल्पकता मता ॥ २५ ॥**

**कदाचिदिति ।** कदाचित्कस्मिंश्चित् क्षणे तासां लौकिकीनां वृत्तीनां व्यवच्छेदाद् भङ्गात्कदाचित् क्षणान्तरे तदनुयोजनात्पुनर्ग्रहयोगाद् वा चित्परामर्शमात्रेण हेतुना न तु चिरन्तनतन्मयत्वेन तादृशोक्तलक्षणलक्षिता सविकल्पकता मता, समाधेरयं सविकल्पभावस्तद्भिन्न आख्यातस्तेन तदनुभूतिरपि भिन्नेति बोध्यम् ।

इदानीं समाधिद्वयाधिकारित्वमुच्यते--

**द्वयोरप्यनयोः सम्यक्समाध्योरधिकारिता ।**
**येषां ते योगिनो नूनं प्रतितिष्ठन्ति चित्पथे ॥ २६ ॥**

**द्वयोरिति ।** उक्तलक्षणयोरुभयाः सम्यक्समाध्योः शमदमादिसत्साधनैः संयुक्तत्वात्सम्यक्समाधिसमाख्यायाः सार्थक्यमिति बोध्यम् । तादृशसमाध्योर्येषामधिकारिता प्रोक्ता, ते उभयविधा समाधिभिन्ना युक्तयुञ्जानसंज्ञया ख्याता योगिनो नूनं चित्पथे

चिन्मये बोधमार्गे प्रतितिष्ठन्ति प्रतिष्ठामधिगच्छन्ति विश्रुतस्थितिमश्नुवते, कालादिकृतचिराचिरस्थितिप्रतिपत्तावपि तेषामधिकारितायाः प्रशस्तत्वादिति भावः।

तद्भिन्ना रसावस्थेदानीं निरूप्यते--

**रसावस्था तु तद्भिन्नाऽधिकारित्वात्सचेतसाम्।**
**यतश्च तदभिव्यक्तिश्चमत्कृत्यनुरोधिनी ॥ २७ ॥**

**रसेति।** रसावस्था रसानुभवदशा तु तद्वैशिष्ट्येन सचेतसामधिकारित्वात्तद्भिन्ना निरूपितप्रभावाख्याता। यतश्च तदभिव्यक्तिः रसाभिव्यञ्जनक्रिया चमत्कृत्यनुरोधिनी रसभावादिनिष्ठचमत्कारानुरोधाद् भवतीति शेषः। चमत्कृतेरानन्दरूपत्वेऽपि रसभावादिमात्रपर्यवसितत्वेन विशेष इत्यवसेयम्।

पुनर्हेतुहेतुमतोर्भेदादपि तयोर्भेद इत्युच्यते--

**तद्द्वयस्थितिसंस्पर्शादाविर्भूता रसस्थितिः।**
**हेतुहेतुमतोर्भेदात्पार्थक्येन प्रसिध्यति ॥ २८ ॥**

**तदिति।** उक्तसमाधिद्वयस्य या स्थितिर्विशिष्टावस्था तस्याः संस्पर्शात् तत्सविधवर्तनादाविर्भूता रसस्थितिः रसानुभूतिदशेयं हेतुहेतुमतोर्भेदात् पार्थक्येन प्रसिध्यति, "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतसूत्रोक्तकार्यकारणभावस्य व्यङ्ग्यव्यञ्जकभावानुबन्धितया सुप्रसिद्धत्वादिति बोध्यम्।

कथमयं संस्पर्शः सम्भवतीत्युच्यते--

**संस्पर्शः साम्यमादाय तदंशे परिकल्प्यते।**
**वैषम्यं भावकोद्भूतभावनानिष्ठमुच्यते ॥ २९ ॥**

**संस्पर्श इति।** तादृशः संस्पर्शस्तदंशे चिदाकारेण साम्यमादाय आंशिकसादृश्यमुन्मील्य परिकल्प्यते, साधर्म्यमूलकत्वात्, श्रुतिप्रमाणत्वाच्च। **वैषम्यं च** भावकेषु भावभूयिष्ठचित्तवृत्तिमत्सु सहृदयेषूद्भूता जायमाना या भावना वासनापरपर्याया तन्निष्ठमुच्यते सुधीभिरिति शेषः।

लौकिकभावानां कथं लोकोत्तरत्वमित्युच्यते--

**लौकिकत्वेऽपि रत्यादिभावानां काव्यसङ्गतेः।**
**लोकोत्तरत्वमुन्नेयं मानत्वेन सचेतसाम् ॥ ३० ॥**

**लौकिकत्वेऽपीति।** यद्यपि रत्यादिविभावादिभावनां लौकिकत्वं लोकोद्भवत्वं तदनुबन्धित्वञ्चेति तादृशे सम्बन्धे सत्यपि काव्यसङ्गतेः काव्यगतत्वेन तेषां लोकोत्तरत्वं सचेतसां मानत्वेन प्रामाण्येनोन्नेयं भवति, "सचेतसामनुभवः प्रमाणं तत्र केवलम्" इत्युक्तत्वात्। इदमेव वैलक्षण्यं काव्यभावानां लोकभावापेक्षया प्रत्यवगन्तव्यम्।

तत्र लौकिकी वृत्तिः साधनमात्रमित्युच्यते--

**तत्रापि लौकिकी वृत्तिः साधनत्वेन गृह्यते ।**
**तदाप्तौ तन्निवृत्तेश्च तदवस्थानमद्वयम् ।। ३१ ।।**

**तत्रेति ।** तत्रापि रसानुभूतावपि सहृदयप्रामाण्यप्रतिपन्नायां सत्यां येयं लौकिकी विभावादिवृत्तिः साधनत्वेन साध्योपायतया गृह्यते, न तु पारमार्थिकं तद्ग्रहणम्, साधनत्वादिपरिहारेण तन्मात्रस्थितेश्चरभावबोधादिति भावः। यतश्च तदाप्तौ रसावस्थोपलब्धौ सत्यां तन्निवृत्तेः साधनत्वरूपकारणत्वपरिहारात् खण्डत्वेन तत्प्रतीतेरभावाच्चाद्वयमेकाकारं तदवस्थानं तन्मयोभवनाख्यं भवतीति शेषः। प्रमातुस्तदभेदेनैव स्वात्मना रसत्वप्रतिपत्तेरित्यवधेयम् ।

निर्विशेषादिहेतुभिः द्वैतत्वाद्यापत्तेरभाव इत्युच्यते--

**विशिष्टाद्वैतता किं वा द्वैतता त्रैतताऽथवा ।**
**निर्विशेषाद् विभाव्यत्वादखण्डत्वान्न युज्यते ।। ३२ ।।**

**विशिष्टेति ।** केचिद् रसदृष्टेर्विशिष्टाद्वैतसिद्धान्तजुष्टत्वमाचक्षते, विभावादिवैशिष्टयस्य तत्र सत्त्वात्, केऽपि द्वैतमतान्तर्गतत्वमामनन्ति, प्रमातृप्रमेययोरुभयोर्विद्यमानत्वात्। तदन्ये च त्रैतोऽभिमतदर्शनत्वेन निदर्शयन्ति, प्रमातृ-प्रमिति-प्रमेयत्रितयस्य तद्भानेऽङ्गीकाराच्च; किन्तु निर्दिष्टहेतुत्रयेणोक्तमतत्रयं तत्र निरस्तं भवति, निर्विशेषात्, विभाव्यत्वात्, अखण्डत्वाच्च। रसवस्तुनो वस्तुतोऽद्वैतसादृश्यमेव संगच्छते, ब्रह्मानन्दसहोदरत्वाख्यानेनाप्यत्रैव पूर्वाचार्याणां सम्मतेः सूचनात्, रसानुगतश्रुतेरप्यत्रैव प्रामाण्याच्च। नोक्तमतत्रयप्रसक्तिस्तत्र रसदृष्टिसिद्धान्तसरणिं मनागपि स्पृशतीति सुधियो विभावयन्तु। ब्रह्मानन्दसहोदरस्याद्वैतसिद्धान्तसहोदरत्वमेव वक्तुं युक्तत्वादिति भावः।

सदसद्भिन्न एवायं रस इत्युच्यते—

**तेन लोकोत्तरास्वादः सदसद्भिन्नचिन्मयः ।**
**काव्ये स हि रसः कोऽपि संवेद्यः कैश्चिदुम्भितः ।। ३३ ।।**

**तेनेति ।** तेनोक्तहेतुत्रयेण लोकोत्तरास्वादो सहृदयहृदयाह्लादमात्रपर्यवसितोऽयं सदसद्भिन्नः सत्त्वेनासत्त्वेनाख्यातुमशक्यश्चिन्मय आनन्दसंविद्रूपः। स हि सुप्रसिद्धो रसः काव्ये काव्यत्वावच्छिन्नकविकर्मणि कोऽपि विलक्षणोऽनुभवैकगम्यः कैश्चित् संस्कारशालिभिः पुण्यवद्भिः काव्यतत्त्वविद्भिः सद्भिः संवेद्य आस्वाद्यः संवेदनायाः परमभूमिस्वरूपः सन्नुम्भितः कल्पितः प्रतिष्ठितः सम्प्रतिपन्नोऽभिव्यञ्जितश्चेति सचेतसां मनीषिणामभिमतसिद्धान्तसारार्थो बोध्यः।

तदेव पुनः प्रकारान्तरेणोच्यते--

**लौकिकालौकिकत्वोक्त्या वृत्त्याभिव्यञ्जनाख्यया ।**
**आनन्दसंविदित्येव शास्त्रकृद्भिर्निरूप्यते ॥ ३४ ॥**

**लौकिकेति** । किञ्च, लौकिकत्वालौकिकत्वयोरुक्त्या ख्यापनेन, अभिव्यञ्जनाख्यया वृत्त्या तदभिव्यञ्जनानुकूलशक्त्या व्यापारविशेषेण शास्त्रकृद्भिर्मम्मटादिभिराचार्यैः, 'आनन्दसंवित्' आनन्दमात्रपरिच्छिन्नचिदात्मा केवलमित्येव निरूप्यते निरूपयितुमिष्यते । सोऽयं रसः काव्यात्मेति बोध्यम् ।

सिद्धान्तानुरोधाद् रसदृष्टिर्योगदृष्टेः पृथगित्युच्यते--

**अपि काव्यार्थरूपत्वाद् रसदृष्टिरियं पृथक् ।**
**योगदृष्टिश्च तादात्म्यादेकान्तात्मप्रकाशनात् ॥ ३५ ॥**

**अपीति** । अपि च काव्यार्थरूपत्वात् काव्यगतपरमार्थरससिद्धान्तानुकूलत्वादियं रसदृष्टिर्वस्तुतो योगदृष्टेः पृथगस्तीति शेषः । योगदृष्टिश्च तादात्म्यात् परात्मतादात्म्यसम्बन्धादेकान्तेनात्मनः प्रकाशनाच्च ततो रसदृष्टेः पृथगिति द्वयोः सैद्धान्तिको भेदः प्रतिष्ठते, क्वचिदांशिकं साम्यं क्वचिदांशिकं वैषम्यं सम्भवदपि सिद्धान्तमार्गस्य पृथक् पृथगुपात्तत्वादिति भावः ।

परमार्थतस्त्वभेदोक्तिरेवेत्युच्यते--

**परमार्थतया तत्त्वानपायादविभेदभाक् ।**
**काव्यात्मा वा परात्मा वा रसोऽसौ ब्रह्म वाऽस्तु तत् ॥ ३६ ॥**

**परमार्थतयेति** । परमार्थतया तु तत्त्वानपायान्निखिलमतात्त्विकं लौकिकार्थजातमपायभूतमपाकृत्य तत्त्वमात्रदर्शनात् परमार्थसारार्थग्रहणाच्च काव्यात्माऽसौ रसो वा परात्मा तद् ब्रह्म वेत्युभयमविभेदभाक् सकलविभेदव्यपेतं प्रत्येतव्यमिति भावः ।

अन्ते चेदमुपसंहारार्थमुच्यते—

**संक्षिप्य गदितं किञ्चिद् यदेतत्तद्विदां मुदे ।**
**यावद्धि रोचते तावद् ग्राह्यमूह्यं स्वयं परम् ॥ ३७ ॥**

**संक्षिप्येति** । यदेतन्मया तद्विदां मुदे शास्त्रचर्चामोदसंवर्धनाम संक्षिप्य किञ्चिद् दिगुन्मीलनमात्रं गदितं तत्र यावन्मदुक्तं रोचते तावन्मात्रं स्वाभिमतं ग्राह्यं विद्वद्भिः परमन्यदनुक्तं स्वयमूह्यं युक्तियुक्तमित्यलं पल्लवितेन ।

# कालिदासीयरूपकाणां भाषिकी संरचना

डॉ० वनेश्वरपाठकः
संस्कृतसदनम्,
इर्गूरोठ, पहाड़ी-साइड, राँची (बिहारप्रदेशः)

❀ ❀ ❀

"कालिदासीयरूपकाणां भाषिकी संरचना" इत्येष विषयः कालिदासीयरूपकत्रय्या भाषिकप्रयोगविधां भाषिकसौन्दर्यविधिं च प्रति स्वाभाविकीं जिज्ञासामुत्पादयति। आद्यरङ्गाचार्येण भरतेन नाटकेषु भाषाप्रयोगमधिकृत्य नाट्यशास्त्रस्य सप्तदशेऽध्याये विस्तरेण प्रतिपादितम्। तमनुसरता दर्पणकारेण विश्वनाथेनापि तथैव प्रोक्तम्। आचार्यभरतेन देशभाषाप्रभेदान् प्रपञ्चयता प्रयोगेऽधिकार्याया भाषायाश्चातुर्विध्यं प्रदर्शितम्—

"अतिभाषार्यभाषा च जातिभाषा तथैव च।
तथा जात्यन्तरी चैव भाषा नाट्ये प्रकीर्तिताः[1]"॥

तत्र अतिभाषा देवैः, आर्यभाषा च नृपैः प्रयुज्यते। जातिभाषा संस्कारपाठ्यसंयुक्ता सम्यग् ग्रामप्रतिष्ठिता द्विविधा भवति-संस्कृतं प्राकृतं च[2]। जात्यन्तरी भाषा तु ग्राम्या भवति। जातिभाषाया उक्तं द्विविधं रूपं संस्कृतं प्राकृतं च नाट्ये प्रयुज्यते। यथाह भरतः—

"भाषा चतुर्विधा ज्ञेया देशरूप(दशरूप)प्रयोगतः।
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते[3]"॥ इति।

उत्तमानां पात्राणां संस्कृतं प्रयोज्यं भवति; किन्तु तानि कारणवशात् प्राकृतमपि प्रयुञ्जते—"कारणव्यपदेशेन प्राकृतं संप्रयोजयेत्[4]"। विश्वनाथोऽप्याह—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्[5]"।
"कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः[6]"॥

---

१. नाट्यशास्त्रे—१७।२३।
२. "जातिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम्।
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम्॥" (तत्रैव—१७।३०)
३. तत्रैव—१७।२२; ४. तत्रैव—१७।३२।
५. सा० द० ६।१५८। अनीचानाम्=मध्यमानाम्, कृतात्मनाम्=उत्तमानाम्।
६. तत्रैव—६।१६८।

भरताभिमतं प्राकृतस्वरूपमप्यत्रोल्लेख्यमस्ति--

"एतदेव (संस्कृतमेव) विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्[1]" ॥

एतदनन्तरं तेन परिज्ञानाय संस्कृतस्थानीयाः केचन विशिष्टाः प्राकृतशब्दा अपि निर्दिष्टाः सन्ति ।

प्राकृतभाषायाः प्रयोगे भरतस्यानुशासनमेवमस्ति । स प्रथमं तस्याः स्थानकृतान् भेदान् प्रतिपादयति —

मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी ।
वाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः[2]" ॥

मागधी, अवन्तिजा, प्राच्या, सूरसेनी ( शौरसेनी ) अर्धमागधी, वाह्लीका, दाक्षिणात्या चेति सप्त प्राकृतभाषाः सन्तीत्याशयः । ( भाषावैज्ञानिकैः प्राकृतस्य केवलं पञ्चैव प्रमुखभेदाः स्वीकृताः सन्ति । साहित्यिकदृष्ट्याऽऽसामेव ग्रहणमास्ते । ) ततः परं पात्राणां स्थितेरनुरूपं भाषाप्रयोगमनुशासता तेन शाकारी ( शकारभाषा ), शाबरी, द्राविडी, आभीरी, चाण्डाली, पैशाचीप्रभृतिविभाषाणामप्युल्लेखः कृतोऽस्ति ।

प्राकृतभाषायाः प्रयोगे आचार्यभरतस्य सामान्यसिद्धान्तोऽयं यन्नाटके सर्वत्र शौरसेनी प्रयोक्तव्या; किन्तु प्रयोक्तारः स्वेच्छया देशभाषामपि प्रयोक्तुं शक्नुवन्ति--

सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः[3]" ॥

भाषाप्रयोगं विस्तरतो विचार्य भरतेन वाक्यप्रयोगस्यापि विधानं कृतम् । विश्वनाथोऽपि तमेवानुवदति--"प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते' । तद्यथा शाकुन्तले ( प्रथमेऽङ्के ) 'गच्छामः' इत्यर्थे 'साधयामस्तावत्' इति । एतस्मिन् वाक्यप्रयोगविचारप्रसङ्गे भरतेनोत्तम-मध्यम-हीनैर्नरैर्ये नराः समानोत्कृष्टहीनास्ते कथं वाच्याः, ते कथं सम्बोध्या इति विचारो विहितः ।

भाषाप्रयोगविषये कालिदासो भरतस्य विधानं सर्वथाऽनुसरति । नाटकेषु सुसंस्कृतभाषायाः प्रयोगे कालिदासस्य बलवद् ध्यानमस्ति । उक्तं च तेन–'संस्कारवत्येव गिरा मनीषी[4]' इति । सुसंस्कृतैव भाषा मनीषिणां शोभेति तत्तात्पर्यम् । कालिदासस्य संस्कृतभाषाऽपि विकसितरूपमेवाश्रयते ; किन्तु भासस्य संस्कृतभाषायामिव

---

१. ना० शा० १७।२ ।

२. तत्रैव—१७।४८ । ( भरतः सूरसेनी, सौरसेनी, सौरसेनं वेति नाम व्यवहरति । दर्पणकारोऽपि तथैव लिखति । भाषावैज्ञानिकैः शौरसेनीति निगद्यते ) ।

३. तत्रैव—१७।४६; ४. कुमार० १।२८ ।

कालिदासस्य वाक्यप्रयोगेऽपि व्याकरणनियमानामवहेलना यत्र तत्र दृष्टिमायाति। एषाऽवहेलना काव्यशास्त्रिभिष्टीकाकारैश्च समुद्भाविता वर्त्तते। यद्यपि प्रयोगास्ते वामनाद्याचार्यैरन्यैर्वा यथाकथञ्चित् समाहिताः सन्ति, तथापि वाक्यप्रयोगे कालिदासस्य कवेरेष स्वातन्त्र्यविलासः प्रतिभाति। भास-कालिदासादिमहाकवीनां तादृशाः प्रयोगा अपि प्रमाणत्वेनाङ्गीकृताः सन्ति परवर्त्तिभिः कविभिराचार्यैश्च।

नाटकेषु संस्कृतभाषायाः प्राकृतभाषायाश्च प्रयोग इति प्रयोगद्वैविध्यं नाट्य-शास्त्रकाराणां नियमः। प्राकृतभाषायाः प्रयोगेऽपि गद्ये शौरसेनी पद्ये च महाराष्ट्री प्रयोक्तव्येति शास्त्रकाराणां सम्मति[1]स्तादृशी प्रयोगपरम्परा च। कालिदासः शास्त्र-काराणां तद् विधानं भास-शूद्रकादीनां प्राचीननाटककाराणां परम्परां च सम्यक् परिपालयति। विदूषकादीनाम्, निम्नपात्राणाम्, स्त्रीपात्राणां च भाषणे प्राकृतस्य प्रयोगे, प्रवेशके प्राकृतस्य व्यवहारे, विष्कम्भके संस्कृतभाषायाः, मिश्रविष्कम्भके च मिश्रभाषायाः ( संस्कृतस्य प्राकृतस्य च ) व्यवहारेऽसौ सर्वथा भरतमतमनुवर्त्तते। नाट्यशास्त्रीयविधानमनुसरताऽपि प्रवीणप्रतिभाया महानाटककारेण तेन प्राकृत-भाषायाः प्रयोगेऽपि यत्र कुत्रचित् स्वातन्त्र्यमवलम्बितमास्ते। तद्यथा—भिक्षूणाम् ( श्रमणानाम् ), वल्कलधारिणां ( तपस्विनां ) च कृते प्राकृतभाषाप्रयोगस्य विधान-मस्तीति भरतस्य तदनुयायिना विश्वनाथस्य च मतम्[2]; किन्तु विक्रमोर्वशीये ( तृतीयेऽङ्के ) नियमस्यास्य व्यत्यासो दृश्यते। तत्र भरतस्य प्रथमः शिष्यो गालवः संस्कृतं वदति। द्वितीयः शिष्यः पेलवः प्राकृतं प्रयुङ्क्ते। अत्र कालिदासस्याभिमत-मिदमेवाभाति यत् सर्वजनहिताय सर्वजनसुखबोधाय च सुखग्राह्यनिबन्धनायाः प्राकृतभाषायाः प्रयोगोऽपि सहैव कर्तव्य एव। अत एव कुमारसम्भवे ( सप्तमे सर्गे ) सरस्वती संस्कारपूतेन संस्कृतेन वरं शिवम्, सुखग्राह्यनिबन्धनेन प्राकृतेन च वधूं पार्वतीं सममेव स्तौति—

"द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन[3]" ॥

अत एव च विक्रमोर्वशीये भरतस्य प्रथमः शिष्यः संस्कृतं द्वितीयः प्राकृतं ब्रूते; किन्त्वभिज्ञानशाकुन्तले प्रथमेऽङ्के सशिष्यो वैखानसः संस्कृतं ब्रूते, तथा चतुर्थेऽङ्के कण्वशिष्यौ गौतमनारदावपि संस्कृतं ब्रूतः। अत्र कालिदासो नाट्यशास्त्रस्य नियममिमं परिपालयन् दृश्यते—

---

१. "सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम्।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ॥" ( सा० द० ६।१५९ )

२. ना० शा० १७।३४-३५, सा० द० ६।१६६ ; ३. कुमार० ७।९०।

"परिव्राण्मुनिशान्तेषु वाक्येषु श्रोत्रियेषु च ।
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत्[१]" ।।

उत्तमसंन्यासिनीनां कृते संस्कृतभाषायाः प्रयोगस्य विधानमस्ति—"संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च[२]"। अत्रापि कालिदासः स्वातन्त्र्यमवलम्बते। अभिज्ञानशाकुन्तले गौतमी, विक्रमोर्वशीये (पञ्चमेऽङ्के) च तापसी प्राकृतं ब्रूतः; किन्तु मालविकाग्निमित्रे परिव्राजिका पण्डितकौशिकी (केवलमेकमेव स्त्रीपात्रं कालिदासस्य) संस्कृतं ब्रूते। अत्र—

"योषित्सखीबालवेश्या कितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा[३]" ।।

इति मतं कालिदासस्याभिमतं प्रतिभाति। अत एव पाण्डित्यप्रदर्शनाय पण्डित-कौशिकी संस्कृतं व्याहरति। शाकुन्तले बालकः सर्वदमनः बालोचितं प्राकृतं ब्रवीति—"जिंभ ले सिंहशावका ! जिंभ दन्ताई दे गणइश्शं"। बालकानां कृते प्राकृतभाषा-प्रयोगो नाट्यशास्त्रकाराणामभिमतः[४]; किन्तु विक्रमोर्वशीये कुमार आयुः पाण्डित्य-पूर्णं संस्कृतं ब्रूते—"( नारदं प्रति ) भगवन् और्वशेय, आयुः प्रणमति। ( पितरं प्रति ) नार्हति तातः पुङ्गवधारितायां धुरि दम्यं नियोजयितुम्[५]"। सम्भवतोऽत्रापि कुमार-स्यायुषः पाण्डित्यप्रदर्शनार्थमेष भाषाविपर्ययः।

"कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेत्" तथा "कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः' इति भरतविश्वनाथयोर्मतं कालिदासस्याप्यभिमतमस्ति। अत एवाभि-ज्ञानशाकुन्तले चतुर्थेऽङ्के प्रियंवदा संस्कृतमाश्रित्य छन्दोमयीं वाणीं ब्रूते—'दुष्यन्तेना-हितं तेजः ... .......' इत्यादि। महर्षिकण्वश्च ( वैदिकयज्ञप्रसङ्गात् ) ऋक्छन्दसाऽऽ-शीर्वादं ददाति –'अमी वेदिं परितः क्लृप्तधिष्ण्याः.... .... ....' इत्यादि।

अभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के धीवरप्रसङ्गेऽपि प्राकृतप्रयोगे कालिदासस्य स्वातन्त्र्यमभिलक्ष्यते। हीनपात्राणां प्रकृत्यनुसारेण शाबरीप्रभृतिविभाषाणां प्रयोगो

---

१ ना० शा० १७।३६–३७; २. सा० द० ६।१६७; ३. तत्रैव—६।१६९।
४. "बाले ग्रहोपसृष्टे च .... ..... ... प्राकृतं पाठ्यमिष्यते।" (ना० शा० १७।३५-३६)।
५. विक्रमो०, अ० ५।

विधेय इति नाट्यशास्त्रीयः सिद्धान्तः । शाकुन्तले षष्ठेऽङ्के रक्षिणौ धीवरश्च मागध्याः प्रयोगं कुर्वन्ति[1]; किन्तु राष्ट्रियः श्यालः, यः शकारस्य प्रातिनिध्यं कुरुते, न शाकारीम् ( यथा शास्त्रकाराणां नियमः ), न वा मागधीम्, न वा दाक्षिणात्यां प्रयुङ्क्ते; अपि तु स शौरसेनीं ब्रूते । कालिदासस्य प्राकृतप्रयोगस्तदानीन्तनलोकप्रचलितप्राकृतभाषारूपं नाधत्ते । तत्रापि स साहित्यिकप्राकृतभाषाया एव रूपमाश्रयते । संस्कृतनाटकेषु प्रयुक्ता प्राकृतभाषा साहित्यस्याङ्गतया संस्कृतेन प्रभाविताऽस्ति । तत्र प्राकृतस्य प्राकृतरूपं न दृश्यते । कालिदासस्य प्राकृतभाषायाः स्वरूपं वररुचेः प्राकृतव्याकरणेन प्राकृतप्रकाशेन परिष्कृतं विकसितसाहित्यिकरूपमस्ति । तस्य नाटकेषु नाट्यशास्त्रीयसिद्धान्तानुसारेण गद्ये शौरसेनीप्राकृतं तथा पद्ये महाराष्ट्रीप्राकृतं प्रयुक्तमस्ति । मध्यदेशः संस्कृतस्य केन्द्रमासीत् । अत एव मध्यदेशीया शौरसेनीप्राकृतभाषा संस्कृतेन विशेषतः प्रभाविताऽस्ति । राजशेखरकृतकर्पूरमञ्जरीनामकसट्टकस्य गद्ये शौरसेन्या हृद्यः प्रयोगो दृश्यते ।

---

१ मागधी—मगधं परितो भाष्यमाणा भाषा मागधी । वररुचिमते शौरसेनीतो निःसृतेयं भाषा । अर्धमागधी मागध्याः शौरसेन्याश्च मध्यवर्तिनी भाषा । बौद्धविद्वद्भिः पालिभाषैव मागधी निगद्यते । संस्कृतनाटकेषु निम्नश्रेण्याः पात्राणि मागधीं प्रयुञ्जते । शाकारी भाषा मागध्या एव विभाषाऽस्ति ।

"शबराणां शकादीनां तत्स्वभावश्च यो गणः ।
शकारभाषा योक्तव्या··· ···· ···· ···· ··· ।।" (ना० शा० १७।५४)

वाह्लीकी, शाबरी तथा चाण्डाली अस्या एव जातिरूपाः सन्ति ।

मागध्यां सषयोः स्थाने शो भवति, यथा—हस्तः=हश्त, सप्त=शत्त, पुरुषः=पुलिश इत्यादि । अस्यां सर्वत्र रस्थाने लो भवति, यथा–अरे=अले, राजा=लाजा इत्यादि । जस्थाने यो भवति, यथा –जानाति=याणादि, जानुकः=याणुअ इत्यादि । प्रथमाविसर्गस्थाने 'ए' भवति, यथा —दत्तः=दिण्णे, धीवरः=धीवले, धर्मः=धम्मे इत्यादि । शौरसेन्यां विसर्गस्थाने ओ भवति, यथा –धर्मः=धम्मो, आजीवः=आजीवो इत्यादि । मागध्यां काचन स्वतन्त्ररचना नास्ति । अर्धमागध्याः प्राचीनतमः प्रयोगः अश्वघोषस्य शारिपुत्रप्रकरणे ततः परं मुद्राराक्षसे प्रबोधचन्द्रोदये च दृश्यते ।

महाराष्ट्री शौरसेन्या सहाधिकं साम्यं बिभर्ति[१]। सा प्राकृतभाषासु परिनिष्ठिता भाषाऽस्ति। आचार्यदण्डी महाराष्ट्रीमेव प्रकृष्टं प्राकृतं मन्यते––'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः[२]'। दण्डिप्राग्वर्तिना वररुचिनापि मागध्यास्तथा पैशाच्या विशेषता अनुक्त्वा तथा महाराष्ट्र्या एव विशेषताः प्रथममुक्त्वा 'शेषं महाराष्ट्रीवत्[३]' इति ब्रुवता महाराष्ट्र्याः प्रकृष्टत्वं प्रतिपादितमस्ति। महाराष्ट्रीप्राकृतभाषायाः काव्य-साहित्यं सुसमृद्धमस्ति। गाहासत्तसई, दहमुहवहो ( सेतुबन्धम् ), गउडवहोप्रभृति-काव्यानि महाराष्ट्र्यामेवोपनिबद्धानि सन्ति। महाराष्ट्री शौरसेन्याः, शौरसेन्या अपभ्रंशस्य च मध्यस्थिता भाषाऽस्ति। केचन भाषाविदस्तु महाराष्ट्रीं शौरसेन्या एव शैलीविशेषम्, अथवा प्राकृतकाव्यरचनाशैल्याः कृत्रिमं रूपं मन्यन्ते। कालिदासस्य महाराष्ट्री हालस्य 'गाहासत्तसई' इत्यस्य भाषावत् साहित्यिकरूपमेवाश्रयते।

अस्मिन् प्रसङ्गे कालिदासस्य महाराष्ट्रीप्रयोगः ( विशेषतो विक्रमोर्वशीये ) समीक्षणीयोऽस्ति। विक्रमोर्वशीये चतुर्थेऽङ्के कालिदास उन्मत्तस्य राज्ञः पुरूरवसो मार्मिकं चित्रणं कृतवानस्ति। उन्मादावस्थायां राजा कदाचित् संस्कृतं वदति, कदाचित् प्राकृतमपभ्रंशं वा। उन्मादावस्थायामपि राजा संस्कृतं वदति चेत् ( अर्थात् शास्त्रस्य मर्यादां पालयति चेत् ), स उन्मत्तः कथं स्यात् ? आचार्यभरतेनापि प्रोक्तमस्ति यत्— "उन्मत्तस्यापि ब्रुवतः प्राकृतं सम्प्रयोजयेत्[४]"। दर्पणकारोऽपि तथैव वदति—"उन्मत्तानामातुराणां सैव ( शौरसेन्येव ) स्यात् संस्कृतं क्वचित्[५]"। "कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः[६]"। अत उन्मत्तस्य राज्ञः पुरूरवसः प्राकृतप्रयोगेऽनौचित्यस्य सम्भावना क्व ?

विक्रमोर्वशीये चतुर्थेऽङ्के गाथासु ( छन्दःसु ) प्रयुक्ता महाराष्ट्री स्वीये शुद्धरूपे नास्ति। सा कालिदासस्यान्यनाटकेषु प्रयुक्तायाः शौरसेन्या महाराष्ट्र्याश्च विपरीत-

---

१. शौरसेनीमहाराष्ट्र्योः सामान्यमन्तरम्––शौरसेन्यां 'गच्छति' इत्यस्य स्थाने 'गच्छदि' भवति, महाराष्ट्र्यां 'गच्छइ' भवति। महाराष्ट्र्यां कतदपगादीनां प्रायो लोपो भवति। शौरसेन्यां थकारस्थाने धकारो भवति, यथा–कथय=कधेहि। महाराष्ट्र्यां 'कहेहि' भवति। महाराष्ट्र्यां खघथफधादीनां हो भवति। शौरसेन्यां पूर्वकालिक-क्रियायाम् 'इअ' प्रत्ययो भवति; किन्तु महाराष्ट्र्याम् 'उण' प्रत्ययो भवति, यथा— पृष्ट्वा = पुच्छिअ ( शौरसेन्याम् ), 'पुच्छिउण' ( महाराष्ट्र्याम् )। शौरसेन्यां 'गम्यते' इत्यस्य स्थाने 'गमिअइ' भवति, महाराष्ट्र्यां 'गमिज्जइ' भवति। महाराष्ट्र्यां कर्मवाच्ये भाववाच्ये च 'य्' इत्यस्य 'इज्ज' भवति। शौरसेन्यां 'तव' इत्यस्य स्थाने 'तुह' भवति, यथा—तव हस्ते = 'तुह हत्थे' इत्यादि। महाराष्ट्र्यां 'तव' इत्यस्य स्थाने 'तुज्झ' इति भवति, यथा—'तुज्झ ण जाणे हिअअं' इत्यादि।

२. काव्यादर्शे—१।३४; ३. प्राकृतप्रकाशे—१२।३२।

४. ना० शा० १७।३२-३४; ५. सा० द० ६।१६५; ६. तत्रैव—६।१६८।

रूपाऽस्ति । अत एव नेपथ्यतः प्रयुक्तास्ता गाथाः ( जम्भालिका, खण्डधारा, द्विपदिका, चर्चरीप्रभृतयो गीतयः ) कालिदासकृता न सर्वा एव ताः प्रक्षिप्तांशा इति केषाञ्चन विदुषां मतम् ।

अपरञ्च विक्रमोर्वशीयस्योत्तरभारतीयप्राचीनपाण्डुलिपीनां चतुर्थेऽङ्के एतादृशानि बहून्यपभ्रंशपद्यानि सन्ति, यानि दक्षिणभारतीयप्रतिकृतिषु न विद्यन्ते। उत्तरभारतीयसंस्करणस्य प्राचीनतमटीकाकारोऽस्ति श्रीरङ्गनाथपण्डितः १६५७ खीस्ताब्दीयः। उत्तरभारतीयं संस्करणं विक्रमोर्वशीयं त्रोटकं वदति। तस्याधारोऽस्ति तैः प्राकृतपद्यैः सह नृत्यानां विधानम्। विक्रमोर्वशीयस्य दक्षिणभारतीयपाण्डुलिपेः प्राचीनतमव्याख्याकारोऽस्ति कातयवेमभूपालः १४०० खीस्ताब्दीयः। दक्षिणभारतीयसंस्करणे तादृशपद्यानामभावेन तत् संस्करणं नाटकं निगद्यते। कालिदासस्यान्यनाटकयोः प्राकृतभाषाप्रयोगस्य, अस्य नाटकस्य च प्राकृतपद्यप्रयोगस्य ( विशेषतश्चतुर्थाङ्कीयस्य ) अनुशीलनं कुर्वद्भिर्भाषाविद्भिस्तथा कातयवेमभूपालस्य विचारेण व्याख्यया च प्रभावितैर्विद्वद्भिरेष सिद्धान्तः स्थापितोऽस्ति यद् विक्रमोर्वशीयस्य चतुर्थेऽङ्के राज्ञः पुरूरवसः प्राकृतपाठः प्रक्षिप्तोऽस्ति। विक्रमोर्वशीयस्येमानि पद्यानि तदानीं प्रचलितानि लोकगीतानि सन्ति, येषां समावेशस्तत्र कालिदासेन कृत इत्यपि केषाञ्चिन्मतम् ।

परन्तु गद्यपद्येषु प्राकृतभाषायाः प्रयोग एतादृशमन्तरं मालतीमाधवप्रसन्नराघव-महानाटकादिष्वपि दृश्यते, अतो विदुषामुक्तं मतं भ्रान्तिपूर्णमस्ति। डॉ० कीथमहोदयेनापि मतस्यास्य प्रबलयुक्त्या निराकरणं कृतमस्ति[१]। अस्मिन् प्रसङ्गे लेखकस्य 'कालिदास–साहित्य एवं सन्दर्भ' इति ग्रन्थो द्रष्टव्योऽस्ति[२]।

वस्तुतः कालिदासस्यैष प्राकृतप्रयोगो महाराष्ट्र्या अपभ्रंशरूपोऽस्ति। अपभ्रंशस्य तावदादिमं साहित्यिकं रूपं कालिदासस्य विक्रमोर्वशीये चतुर्थेऽङ्के विरहोन्मत्तस्य राज्ञः पुरूरवसः पद्यरूपसूक्तिष्वेव दृष्टिमेति। अपभ्रंशस्य प्रथमं चर्चा पातञ्जले महाभाष्येऽवलोक्यते[३]। भरतस्य नाट्यशास्त्रेऽपभ्रंशस्यापभ्रंशशब्देन न किन्त्वाभीरा-

---

१. दि संस्कृत ड्रामा, पृ० १५१–१५२।

२. डॉ० बनेश्वरपाठकः––'कालिदास–साहित्य एवं सन्दर्भ', पृ० ६–७।

३. "एकस्यैव हि शब्दस्य बहवोऽपभ्रंशाः, तद्यथा गौरित्यस्य शब्दस्य गावी, गोणी .... .... ..... ..... इत्यादयो बहवोऽपभ्रंशाः" ( महाभाष्ये, पस्पशाह्निके )।

महाभाष्यमनुसरता भर्तृहरिणापि प्रोक्तम्—

"शब्दसंस्कारहीनो यो गौरिति प्रयुयुक्षिते।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्" ॥

(वाक्यपदीये—१।४८)

दीनां भाषासु बीजरूपेण सङ्केतो लभ्यते[१]। कालिदासेन तस्यैव विकसितं रूपं विक्रमोर्वशीयस्य चतुर्थेऽङ्के केषुचित् पद्येषु प्रयुक्तमास्ते। तानि पद्यानि कालिदासस्यैवेत्यङ्गीकारे न काचन विप्रतिपत्तिः।

कालिदासस्य महाराष्ट्र्याः, तस्या अपभ्रंशस्य च सौन्दर्यमुद्घाटयितुं कतिचिदुदाहरणान्यत्र प्रस्तूयन्ते—महाराष्ट्र्याः ( पद्ये शाकुन्तले ) यथा—

"तुज्झ ण जाणे हिअअं मम उण मदणो दिवा वि रत्ति वि।
णिग्घिण ! तवइ बलीअं तुइ वुत्त मणोरहाइँ अंगाइं[२]"॥

( पद्ये मालविकाग्निमित्रे ) यथा—

"दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अम्हो अपङ्गओ मे परिस्फुरइ किं वि वामओ।
एसो सो चिरदिट्ठो कहँ उण उवणइदव्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हम्[३]"॥

अपभ्रंशस्य ( पद्ये विक्रमोर्वशीये ) यथा—

"रे रे हंसा ! किं गोइज्जइ, गइ अणुसारें महँ लक्खिज्जइ।
कहँ पइँ सिक्खिउ ए गइ लालस, सा पइँ दिट्ठी जहणभरालस[४]"॥

"हउँ पइँ पुच्छिमि आअक्खहि गअवर,
ललिअ पहारें णासिअतरुवर।
दूरविणिज्जिअ ससहरुकंती
दिट्ठि पिआ पइँ सम्मुह जंती[५]"॥

---

१. ना॰ शा० १७।५५ ( सा० द० ६।१६३ )। दण्डिना तु स्पष्टमेवोक्तम्—"आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः।" ( काव्यादर्शे—१।३६ )

२. "तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रावपि।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि॥" (शाकु०, अ० ३)

३. "दुर्लभः प्रियो मे तस्मिन् भव हृदय निराश—
महो अपाङ्गो मे स्फुरति किमपि वामः।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम्॥" (मालवि०, अ० २)

४. "रे रे हंसाः किं गोपाय्यते, गत्यनुसारेण मया लक्ष्यते।
केन तव शिक्षिता एषा गतिलालसा, सा त्वया दृष्टा जघनभरालसा"॥
( विक्रमो० ४।१७ )

५. "अहं त्वां पृच्छामि आचक्ष्व गजवर
ललितप्रहारेण नाशिततरुवर।
दूरविनिर्जितशशधरकान्तिः
दृष्टा प्रिया त्वया सम्मुखं यान्ती"॥ (विक्रमो० ४।२२)

कालिदासस्य भाषासौष्ठवमप्यवलोकनीयमस्ति। भाषायां सौष्ठवमाधातुं रीतेः सदुक्तेर्वक्रोक्तेश्च समुचितयोजना परमावश्यकी। रीतिषु वैदर्भ्याः सर्वोत्कृष्टत्वं सर्वैरङ्गीकृतमस्ति। कालिदासस्य काव्येषु वैदर्भ्याः सुन्दरः प्रयोगो दृश्यते। 'वैदर्भी कालिदासस्य' इत्युक्तिर्विद्वत्सु प्रसिद्धैव।

संस्कृतभाषा स्वत एव मधुराऽस्ति। अस्या माधुर्यं परिवर्द्धयितुं कालिदासेन माधुर्यगुणव्यञ्जकैर्वर्णैर्युतायाः, समासरहितायाः स्वल्पसमासाया वा, ललितपदरचनाया वैदर्भ्याः प्रयोगः कृतः, स तदीयभाषाया महती विशेषता। कालिदासस्य काव्यनाटकेषु शृङ्गारस्य करुणस्य च प्रामुख्यमस्ति। अत एवाऽसौ रसयोरनयोरनुरूपायाः कोमलकान्तपदावलीसंवलिताया भाषाशैल्याः प्रयोगे सर्वथा सावधानोऽस्ति। कालिदासस्य वैदर्भीविभूषितां भाषां प्रशंसन्नाचार्यदण्डी प्राह—

"लिप्ता मधुद्रवेणासन् यस्य निर्विषया गिरः।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम्"॥ (काव्यादर्शः)

कालिदासस्य भाषायां सहजतयोपनिबद्धाः सदुक्तयो लोकोक्तयश्च तस्य गिरां सौन्दर्यमभिवर्द्धयन्ति। प्रत्येकपात्रस्य मुखात् तदनुरूपभाषायाः सदुक्तीनां च प्रयोगे कालिदासस्य कौशलं दर्शनीयमस्ति। लतावृक्षादीनां सम्पर्के वर्द्धितानां तापसबालानां मुखाल्लतावृक्षादिसम्बद्धा एव सूक्तयो निःसरन्ति—"क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते[1]"। "को नामोष्णोदकेन नवमालिकां सिञ्चति[2]"। यज्ञकर्मण्यध्यापने च निरतस्य वैदिकर्षेः कण्वस्य मुखात् तथैव सूक्तयो निर्गच्छन्ति—"दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता[3]"। "वत्से ! सुशिष्यपरिदत्तेव विद्याऽशोचनीयासि संवृत्ता[4]" इत्यादि। भोजनभट्ट उदरम्भरिर्विदूषकः खाद्यसामग्रीसम्पन्नामेव सूक्तिमुपयुङ्क्ते—"यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभोगिणो भवत इयमभ्यर्थना[5]"। "एष खलु खण्डमोदकसदृश उदितो राजा द्विजातीनाम्[6]" इत्यादि।

हीनपात्राणां मुखादपि तदुचिताया उक्तेः प्रयोगः शाकुन्तलीये धीवरप्रसङ्गे द्रष्टव्यः। एवमेव कालिदासस्य रूपकेषु यत्र तत्र प्रयुक्ता लोकोक्तयोऽपि द्रष्टव्याः सन्ति। दिङ्मात्रं यथा ( मालविकाग्निमित्रे ) विदूषकः—(राजानं प्रति ) "मुधेदानीं

---

१. शाकुन्तले, अ० ३; २. तत्रैव, अ० ४; ३. तत्रैव।
४. तत्रैव; ५. तत्रैव, अ० २; ६. मालविका०, अ० ३।

मञ्जूषेव रत्नभाण्डं यौवनं वहसि[1]"। "बन्धनभ्रष्टो गृहकपोतो विडालिकाया आलोके पतितः[2]"। "दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति[3]"। "कथं न भेष्यामि, सिमसिमायन्ति मेऽङ्गानि[4]" इत्यादि। ( विक्रमोर्वशीये ) विदूषकः (धारिणीमभिलक्ष्य )—"छिन्नहस्ते मत्स्ये पलायिते निर्विण्णो धीवरो भणति—गच्छ धर्मो मे भविष्यति[5]"। ( शाकुन्तले ) विदूषकः—"ततो गण्डस्योपरि पिटकः संवृत्तः"। "अरण्ये मया रुदितमासीत्"। "न खलु दृष्टमात्रस्य तवाङ्कं समारोहति[6]" इत्यादि।

कालिदासस्येमाः सरसाः सूक्तीरेवाभिलक्ष्य बाणभट्टेन स्वीये हर्षचरिते प्रोक्तम्—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते" ॥

कालिदासस्य वक्रोक्तयस्त्वतीव मनोहराः सन्ति। वक्रोक्त्या 'वाचिकरसः' समुद्भवति यः स्वाभाविकरसस्य ( शृङ्गारादेः ) परिपोषे सहायको भवति। कालिदासस्य वक्रोक्तयः शाकुन्तले ( प्रथमेऽङ्के ) यथा—"आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते, कतमो वा विरहपर्युत्सुकजनः कृतो देशः ? किं निमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः[7]"। तत्रैव पञ्चमेऽङ्के "अनार्य ! आत्मनो हृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते[8]" इत्यादि।

वस्तुतः श्रुतिमधुरशब्दयोजनायां कालिदासः सर्वत्राऽऽस्थावान् दृश्यते। तस्य भाषायां सरलतायाः, सुबोधतायाः, प्रसादगुणस्य च समावेशः सर्वत्र दृक्पथमायाति।

कालिदासस्य रूपकेषु प्रयुक्तं सम्भाषणमपि भाषासौन्दर्यस्य दृष्ट्या प्रेक्षणीयमस्ति। सम्भाषणे ( कथोपकथने ) सरलता, संक्षिप्तता, ओजस्विता चेति गुणत्रयमपेक्षितमस्ति। पात्रानुगुणं परिस्थित्यनुरूपं च सम्भाषणमायोजयितुं कालिदासः सर्वत्र यत्नवानास्ते। मालविकाग्निमित्रे प्रथमेऽङ्के राज्ञोऽग्निमित्रस्योत्सुकताम्, परिव्राजिकायाः कौशिक्या धूर्तताम्, आचार्यगणदासहरदत्तयोः कलहम्, ताभ्यां सह विदूषकस्य व्यङ्ग्यविनोदं दर्शयितुं कालिदासेन यादृशं सम्भाषणं प्रस्तुतीकृतं तदवश्यमेव मनोहारि वर्त्तते। अस्मिन् प्रसङ्गे शाकुन्तलस्य पञ्चमेऽङ्के कण्वस्याश्रमादागतानां राज्ञा दुष्यन्तेन सह समायोजितं सम्भाषणमप्यवलोकनीयमस्ति। अस्य सम्भाषणस्य भाषिकसौष्ठवमेवाभिलक्ष्यालोचकैर्नाटकस्यास्य चतुर्थाङ्कस्यापेक्षया पञ्चमाङ्केऽधिकं रामणीयकं दृश्यते—

---

१. मालविका० अ० ४; २. तत्रैव; ३. तत्रैव; ४. तत्रैव।
५. विक्रमो० अ० ३; ६. शाकुन्तले अ० २; ७. अनसूया—राजानं प्रति।
८. शकुन्तला—राजानं प्रति।

"शाकुन्तलचतुर्थोऽङ्कः सर्वोत्कृष्ट इति प्रथा।
न सर्वसम्मता यस्मात् पञ्चमोऽस्ति ततोऽधिकः" ॥

नादमधुरशब्दयोजनायामपि कालिदासः सिद्धहस्तः कविः। तद्यथा—"निर्ह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि[१]"। अत्र मकारानुवृत्त्या मृदङ्गस्य तालध्वनेर्मनोरममनुकरणं श्रुतिपथमेति। एतादृशं नादमाधुर्यं पाठकानां मनांसि हठादावर्जयति। 'मायूरी मादयति मार्जना मनांसि' इत्यत्र नादमाधुर्यसम्पन्ना कवेरानुप्रासिकी शब्दयोजनाऽपि दर्शनीयाऽस्ति। भाषायाः शोभातिशायने शब्दालङ्काराः (तत्राप्यनुप्रासः) महतीं भूमिकामादधते।

कोमलकान्तपदावल्याः प्रयोगे कालिदासो यथा प्रवीणस्तथा परुषपदयोजनायामपि स कस्यचित् पश्चाद्वर्त्ती न। तस्य निम्नोद्धृतं केवलमेकमेव पद्यं तस्य कविताया ओजस्वितायाः प्रख्यापने पर्याप्तमस्ति—

"तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि।
कोदण्डपाणिविनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम्[२]" ॥

कालिदासस्य भाषायाः सरलतां स्वाभाविकतां प्राञ्जलतां वक्रोक्तेश्चमत्कारितां च निदर्शयितुं तस्यायमेक एव श्लोकः पर्याप्तोऽस्ति—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः[३] ॥"

वस्तुतो भाषाया नैसर्गिकं रूपं निर्मातुं कालिदास एव क्षमो नापरः। तस्य नैसर्गिकलालित्यलालिता सहृदयहृदयाह्लादिनी गिराऽनलंकृताऽपि तस्य निसर्गकन्या शकुन्तलेवाधिकमनोज्ञा प्रतिभाति—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्" ॥

कालिदासो यादृशं भावमभिव्यक्तीकर्तुमभिवाञ्छति तादृशी भाषा, तादृशाः शब्दाश्चाहमहमिकया तस्य सम्मुखमापतन्ति। सारस्वतकवेः कालिदासस्येदमनन्यदृष्टं वैशिष्ट्यं दर्शनीयमस्ति। उदाहरणार्थम्—

१. मालविका० १।२१; २. तत्रैव—५।१० ; ३. विक्रमो० १।१०।

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती[1]" ॥

वस्तुतः सौन्दर्यसृष्टिस्तत्त्वान्वेषिभिः कदापि न सम्भविनी। तत्त्वान्वेषिणो ( गुणालङ्कारादितत्त्वान्वेषिणः ) विद्वांसः कवयश्च काव्यमार्गे हता, कालिदासस्तु महान् कृती। अस्मिन्नेकस्मिन्नेव पद्येऽनुमानोत्प्रेक्षा-सन्देह-रूपकातिशयोक्ति-कारकदीपक-काव्यलिङ्गाद्यलङ्काराणामङ्गाङ्गिभावेन समावेशो भरतागममर्मज्ञानां कृते तावदाश्चर्यस्य विषयः। शाकुन्तले भाषाभावयोर्मधुरसमावेशमवलोक्यैव जर्मनकविर्गेटे नर्तितुमारभत। विश्वकवी रवीन्द्रोऽपि कालिदासस्यानन्यसाधारणीं विशेषतामिमां विलोक्य विमुग्धः सन्नाह—"आमि आर किछु जानी ना केवल—

'भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डबर्हः[2]' ॥

एइ श्लोकटी पड़िया आमार मन मयूर नाचिया उठिल।"

निष्कर्षतः संस्कृतनाटकेषु भाषायाः प्रयोगे कालिदासः, तत्पूर्ववर्त्तिनो भासादयः, तत्परवर्त्तिनो विशाखदत्तादयश्च सर्व एव नाट्यकारा नाट्यशास्त्रीयं विधानमनुवर्त्तन्ते; किन्तु नाट्यशास्त्रीयस्यान्यशास्त्रीयस्य वा मापदण्डस्य सर्वथाऽनुवर्त्तनं कालिदासस्य सर्वातिशायिन्याः प्रतिभायाः स्वीकार्यं नास्ति। भाषायाः प्रयोगे कालिदासेन स्वातन्त्र्यमवलम्बितमस्तीति पूर्वमुक्तमेव। नाट्ये प्राकृतगद्ये शौरसेन्याः, प्राकृतपद्ये महाराष्ट्र्याः प्रयोगः शास्त्रकाराणां नियमस्तादृशी परम्परा च। स प्राकृतगद्ये शौरसेनीं प्राकृतपद्ये महाराष्ट्रीं प्रयुञ्जानोऽपि शाकुन्तलस्य षष्ठेऽङ्के धीवरप्रसङ्गे मागधीमुपयुङ्क्ते। विक्रमोर्वशीये चतुर्थेऽङ्के च तेनापभ्रंशस्य प्रयोगः कृतोऽस्तीत्यपि पूर्वं प्रदर्शितमस्ति।

लोकोत्तरवर्णनानिपुणकवेः कालिदासस्य पात्राणां प्रकृतेः स्थितेश्चानुरूपं प्रयुक्तायां सरलप्राञ्जलपरिमार्जितायां प्रवाहपूर्णायां भाषायां रसानुगुणगुणरीत्यलङ्काराणां तथा स्थाने-स्थाने तदुक्तीनां लोकोक्तीनां वक्रोक्तीनां च प्रयोगेण कथोपकथनादीनां च समुचितसंयोजनया तस्य भाषा समधिकसौन्दर्यपूर्णा सप्राणा च सञ्जातास्ति। तस्य भाषिकसौन्दर्यविधिं प्रशंसता महर्ष्यरविन्देन प्रोक्तम् -

---

१. शाकु० १।२३;   २ कुमार० १।१५।

( भाषानुवादः ) "कालिदासो मूर्धन्यकलाकारोऽस्ति। स भावनायां गम्भीरः, रचनायां मधुरः, नादस्य भाषायाश्च स्वामी वर्त्तते। स गीर्वाणगिराया असीमसम्भावनासु स्वस्मै पद्यपद्धतेः पदयोजनायाश्चैतादृशं निर्माणं कृतवानस्ति यन्निश्चितरूपेणात्यधिकं महत्, अत्यधिकं शक्तिशालि, एवमधिकं नादविकसितमस्ति। कालिदासेन संस्कृतगिरा श्रेष्ठनादस्य भव्यप्रासादे निर्मितोऽस्ति। तस्य भाषायाः शैलीगतविशिष्टताऽस्ति––सुसंघटिता, किन्तु नैसर्गिकी संक्षिप्तता, मसृणं गाम्भीर्यमेवं सुस्निग्धमौदार्यम्, पद्यगतश्रेष्ठस्वरसामञ्जस्यस्य परिष्कृतगद्यस्य च सशक्तमेवं प्राञ्जलं सौन्दर्यम्, एवं संक्षिप्तायास्तथा प्रभविष्णोः पदयोजनाया निश्चितार्थवत्ता, यत्र रङ्गस्य माधुर्यस्य च समुच्छलितः प्रवाहोऽस्ति।··· ···· ··· ···आभिः स्थायिविशिष्टताभिः सम्पन्नायां तस्य वाण्यां नादस्याभिव्यक्तेश्च सम्पूर्णभव्यताया मञ्जुलः समावेशो दृश्यते। तस्य नाट्यगतशैल्यामेकमनन्यसाधारणं सौन्दर्यं तथा माधुर्यं विद्यते, येन तस्य भाषा संलापस्य नाटकीयवृत्तेः सूक्ष्मातिसूक्ष्मभावाभिव्यक्तेश्च सर्वथोपयुक्ताऽस्ति"।
( Shree Arbindo–Kalidasa, Second Series, P. 16–17)



# व्यायोगनायकत्वविमर्शः

डॉ० राजदेवमिश्रः

पूर्वकुलपतिः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

रूपकस्य दश भेदा भवन्ति—नाटकम्, प्रकरणम्, भाणः, प्रहसनम्, डिमः, व्यायोगः, समवकारः, वीथी, अङ्कः, ईहामृगश्च। एषु दशभेदेषु नाटकप्रकरणयोः प्राधान्यं तथान्येषां भेदानां तदपेक्षया गौणताऽस्ति। एषां समेषां रूपकभेदानां वस्तु, नेता, रसश्च भेदकतत्त्वेनोरीक्रियन्ते। शोधनिबन्धेऽस्मिन् व्यायोगस्य नायकत्वविषयको विचारो विधीयते।

'वि-आङ्' उपसर्गपूर्वक-'युज्'धातोर्घञ्प्रत्यययोगाद् व्यायोगपदं निष्पद्यते। व्यायोगपदस्यान्वर्थकतां प्रकाशयन्नभिनवगुप्तो वदति—'व्यायोगे युद्धप्राये नियुध्यन्ते पुरुषा यत्रेति व्यायोगः[1]'। पुरुषा इति बहुवचनेन सिद्ध्यति यद् व्यायोगे पुरुषबाहुल्य-मर्थान्नायकबाहुल्यं भवति। रूपकभेदस्यास्य वस्तु युद्ध( कलह )मूलकं भवति यस्मिन्ननेकपुरुषाः संलग्ना भवन्ति। 'व्यायुज्यन्तेऽस्मिन् बहवः पुरुषा इति व्यायोगः' इति दशरूपकालोकवृत्तिकारस्य धनिकस्य कथनेनापि व्यायोगे पुरुषानेकत्वं ( नायका-नेकत्वं ) सिध्यति। नाट्यदर्पणकारकृतव्यायोगपदनिर्वचनेनापि व्यायोगे नायक-( पात्र )बाहुल्यं सिध्यति[2]।

आचार्यभरतो व्यायोगे प्रख्यातनायकत्वमङ्गीकृत्य तस्य दिव्यनायकत्वं राजर्षि-नायकत्वञ्च निषेधति[3]। भरतस्यैतद्विषयकमतं विवेचयताऽभिनवगुप्ताचार्येणाभिनव-भारत्यामुच्यते 'दिव्यैर्देवनृपैः ऋषिभिश्च नायकैः न निबद्धो भवतोत्यर्थः' इत्यादिना स एवार्थः परिपोषं नीयते। स खलु व्यायोग उदात्तकोटिकराजादेर्नायकत्वमपाकृत्या-

---

१. ना० शा०, अ० भा०, अ० १८, पृ० ४४५।

२. विशेषेण आ समन्ताद् युज्यन्ते कार्यार्थं संरमन्तेऽत्रेति व्यायोगः।

( नाट्यदर्पणे, द्वितीय-विवेके, पृ० २२१ )

३. "व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः"। ( ना० शा० १८।९० )

"न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः"। ( तत्रैव—१८।९२ )

मात्यसेनापतिप्रभृतेर्नायकत्वं स्वीकुरुते[१]। भरतेन शब्दतो नायकस्वरूपसंख्यादिकं नोक्तं तथापि 'यथा समवकारे' इत्युक्त्या तेन व्यायोगे द्वादशनायकतोररीक्रियते। अभिनवगुप्तोऽमुमेवार्थं विशदयत्येभिः शब्दैर्यथा समवकार इति द्वादशेत्यर्थः[२]।

'व्यायोगश्चैकनायकः' इत्युक्त्वा विष्णुधर्मोत्तरकारेण व्यायोग एकनायकताङ्गीक्रियते।

धनञ्जयानुसारेण व्यायोगे प्रख्याता उद्धता नरा गृह्यन्ते[३]। धनिको वृत्ताविममेवार्थं 'व्यायुज्यन्ते बहवः पुरुषाः' इत्येभिः शब्दैः स्पष्टयति। कारिकाशतेन नरेति शब्देन वृत्तिगतेन पुरुषेति शब्देन च नायकस्यैवाभिप्रायो ग्राह्यो भवति। दशरूपककारैः स्पष्टतो नायकसंख्यादिव्यादिव्यत्वविषये न किमप्युक्तम्; परन्तु 'बहवः पुरुषाः' इत्यत्र बहुवचनप्रयोगेण व्यायोगस्यानेकनायकत्वमदिव्यनायकत्वञ्च सिद्धं भवति। परशुरामस्य व्यायोगनायकता प्रश्नमिममनायासेनैव समुत्थापयति यत् स ( परशुरामः ) ख्यातः, उद्धतश्चास्ति; परन्तु तस्यादिव्यता नास्ति। यतो हि मनुष्यकोटौ तस्य गणना कर्तुं न पार्यते। इत्थं व्यायोगलक्षणगतख्यातोद्धतनराश्रयेति पदस्याशयः स्वस्मिन् सर्वांशतः कथं घटितुं शक्नुयात् ?

सागरनन्दी व्यायोगस्य प्रख्यातनायकत्वं मनुते[४]। स सामान्यतो भरतमेवानुसरति।

आचार्यहेमचन्द्रस्तु सर्वांशत आचार्यभरतमतमाश्रयते। तन्मते नास्ति किमपि मौलिकत्वम्[५]।

नाट्यदर्पणकारो व्यायोगलक्षणप्रतिपादनात्प्रागेव तस्य मनुष्यनायकतामङ्गीकुरुते[६]। स व्यायोगस्य दिव्यानां ( देवादीनां ) तथा राज्ञां नायकतां न स्वीकरोत्यपि तु दीप्तरसं दृष्टिगतं विधाय प्रख्यातामात्यसेनापत्यादीनां नायकत्वं वाञ्छति[७]। तन्मते

---

१. दिव्यनायकाभावात् केवलमत्रोदात्तस्य राजादेः न नायकता; अपि त्वमात्यसेनापतिप्रभृतेर्दीप्तरसस्य, अत एवाह—प्रख्यातनायकेति। उदात्तग्रहणमपाकर्त्तव्यम्।
( अभि०, पृ० ४४४ )

२. तत्रैव, पृ० ४४४।

३. ख्याततिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः। (द० रू०, तृ० प्र०, पृ० १७२ )

४ (स च) प्रख्यातनायकविषयः ऋषिकन्यापरिणययुतः। (ना० ल० र० को०, पृ० २६४)

५. काव्यानुशासने, अ० ८, पृ० २८६–८७।

६. तत्रापि मनुष्यनायकप्रत्यासत्त्या प्रथमं व्यायोगं लक्षयति। (ना० द०, पृ० २१८)

७. अदिव्यभूपतिस्वामी··· । (ना० द०, द्वि० वि०, पृ० २१८ )
तथा दिव्यभूपतिवर्जितः सेनापत्यमात्यादिदीप्तरसनायकसम्पन्नः। (ना० द०, पृ० २२१)

दीप्तरससम्बद्धो नायकः स भवति, यः कार्यसिद्धौ विलम्बं ( कालक्षेपं ) न सहते तथा शीघ्रमेव फलप्राप्त्यर्थं यतते[१]।

नायकसंख्याविषये नाट्यदर्पणकारैः स्फुटरूपेण न किमप्युक्तम्। तत्कृतेन व्यायोगलक्षणेन व्यायोगपदनिर्वचनेन च व्यायोगे नायकबाहुल्यसिद्धिर्जायते। नामोल्लेखमन्तरा तैरीदृशाचार्याणामुल्लेखः कृतो यैर्व्यायोगे द्वादशसंख्याका नायकाः स्वीक्रियन्ते। एतेनेदं प्रतीयते यत्तेषां मते व्यायोगे द्वादशनायकानां स्थितिर्न भवति[२]।

व्यायोगोदाहरणरूपेणैभिर्जामदग्न्यजयस्योल्लेखः कृतो यस्मिन् स्वपितृवधकुपितः परशुरामः सहस्रार्जुनं हन्ति। नाट्यदर्पणे व्यायोगगतस्य नायकस्य धीरोदात्तादिनायककोटीनामपि समुल्लेखो न जातः। व्यायोगे नाट्यदर्पणकारैर्वीररौद्रादिदीप्तरसानां स्थितिः स्वीकृता तथा युद्धसंघर्षादयो वर्ण्यविषयत्वेन मताः। व्यायोगोदाहरणरूपेणोद्धृतजामदग्न्यजयनामके व्यायोगे नायकः परशुरामः स्फुटतो धीरोद्धतकोटिको विद्यते। अत एतत्सर्वं समाश्रित्य न किमप्यौचित्यमस्मिन् कथने यद् व्यायोगनायकस्य धीरोद्धतता नाट्यदर्पणकारसम्मता।

सन्दर्भेऽस्मिन् प्रश्नोऽयमापातततो विचारपथं समायाति यदेभिराचार्यैर्यदा दिव्यानां राज्ञाञ्च व्यायोगनायकत्वमनादृत्य अमात्यसेनापत्यादयो नायकरूपेणोररीक्रियन्ते, तदा दिव्यपात्रभूतस्य परशुरामस्य तदुद्धृते जामदग्न्यजयाभिधाने व्यायोगे नायकत्वं कथं सङ्गतिं याति? किं परशुरामस्यादिव्यता स्वीकृता स्यात्? एतदपि विचार्यम्।

आचार्यशारदातनयस्य मते व्यायोगस्य नायका धीरोदात्तकोटिकास्त्रयश्चत्वारः पञ्च वा प्रख्याता देवा राजर्षयो वा भवितुमर्हन्ति। तेन व्यायोगे दशाधिका नायका न स्वीक्रियन्ते[३]।

रसार्णवसुधाकरकारः शिङ्गभूपालो व्यायोगे ख्यातवृत्तत्वं दीप्तरसत्वं च स्वीकृत्य केवलं निस्सहायनायकत्वं मनुते[४]। एतेन नायकस्य कोटिः संख्या च नोल्लिखिता। 'निस्सहायनायकः' इत्यत्रैकवचनप्रयोगेण नायकस्यैकसंख्यात्वं स्वीकर्तुं शक्यते। आचार्यस्यास्योल्लेख्यं वैशिष्ट्यमिदं यदनेन व्यायोगे दशसंख्याका अवरा ( निकृष्टाः ) उद्धतकोटिकाः प्रतिनायकाः स्वीकृताः सन्ति। न केनाप्यन्येनाचार्येण प्रतिनायकोल्लेखः कृतः[५]।

---

१. दीप्तरसनायकयुक्तत्वात्..... ..... फलागम एव यतते। ( ना० द०, पृ० २१९ )

२. केचिदस्य द्वादशनेतृकत्वमाम्नासिषुः। ( तत्रैव, पृ० २२१ )

३. धीरोदात्ताश्च विख्याता देवा राजर्षयोऽथवा।
नायकास्त्रिचतुष्पञ्च भवेयुर्न दशाधिकाः॥ ( भावप्रकाशने, अ० ८, पृ० २४ )

४. ख्यातेतिवृत्तसम्पन्नो निस्सहायकनायकः। (रसार्णवसुधाकरे)

५. युक्तो दशावरैः ख्यातैरुद्धतैः प्रतिनायकैः। ( तत्रैव )

आचार्यविद्यानाथेनातिसंक्षिप्ते स्वीये व्यायोगलक्षणे वस्तुतः ख्यातत्वमङ्गीकृत्योद्धतनायकता स्वीकृता। अनेनन 'उद्धतो नायको मतः' इति वचनेन स्पष्टतो व्यायोगनायकस्योद्धतकोटिः स्वीकृता[१]। तस्य नायकसंख्याविषयको विचारो न याति दृष्टिपथम्।

आचार्यविश्वनाथेन साहित्यदर्पणे व्यायोगनायकस्य स्पष्टचर्चा कृता। तदनुसारं व्यायोगे धीरोद्धतकोटिकः प्रख्यातो दिव्यो राजर्षिर्वा नायको भवति[२]। राजर्षेर्दिव्यस्य वा धीरोद्धतता नासङ्गता। यतो देवाः स्वभावत उद्धता भवन्ति, तथा राजर्षयस्तु निसर्गतश्चतुर्भिः प्रकारैर्विभूषिता मन्यन्ते। साहित्यदर्पणे न नायकसंख्या न वा प्रतिनायकविषयाश्च चर्चिताः। आचार्येणानेन 'सौगन्धिकाहरणम्' व्यायोगस्योदाहरणत्वेनोद्धृतम्।

आचार्यशुभङ्करेण सङ्गीतदामोदरे व्यायोगे वीरस्याधिक्यं शृङ्गारस्य चाल्पत्वं युद्धात्मकं क्रियाकलापत्वं चाङ्गीकृत्य दिव्यो राजर्षिर्वा तस्य नायकतयाभिमतः। 'दशाधिका नराः' इति कथनं तस्य व्यायोगपात्राणां संख्यासूचकमथवा नायकसंख्याबोधकमिति स्पष्टं वक्तुं न शक्यते[३]। शुभङ्करस्य व्यायोगविषयकं मतं विश्वनाथशारदातनयोर्मते न सादृश्यं यातीति वक्तुं पार्यते।

अभिनवकालिदासः (नरसिंहकविः) व्यायोगे प्रख्यातवस्तु वीररसस्य प्राधान्यञ्च मत्वा तस्मिन् धीरोद्धतकोटिकं नायकं स्वीकरोति। नायकसंख्या तेन न निर्दिष्टा[४]।

मन्दारमरन्दचम्पूकारः श्रीकृष्णकविर्व्यायोगस्य नेतारमुद्धतं स्वीकुरुते। तन्मते व्यायोगे वस्तु प्रख्यातं तथा रौद्ररसस्य प्राधान्यञ्च भवति[५]। तेन नायकसंख्या न चर्चिता। श्रीकृष्णकवेर्मतं विद्यानाथमतसादृश्यं भजते।

साहित्यसाररचयितृसर्वेश्वराचार्यप्रतिपादितेऽतिस्वल्पकायके व्यायोगलक्षणे नायकस्य ख्यातोद्धतता चाभिप्रेता। तत्र नायकसंख्या च नोल्लेखं गता[६]।

१. यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः। (प्रतापरुद्रीये, पृ० ९०)

२. ख्यातेतिवृत्तो व्यायोगः······ राजर्षिश्च दिव्यो वा भवेद्धीरोद्धतश्च सः।
—साहित्यदर्पणे, षष्ठपरिच्छेदे, पृ० ५१३।

३. स्वल्पशृङ्गारो वीररसाधिकः। दशाधिकाः नराः चात्र दिव्यराजर्षिनायकः।
—सङ्गीतदामोदरे।

४. प्रख्यातमितिवृत्तं स्यान्नेता धीरोद्धतो रसः।
—नञ्जराजयशोभूषणे, षष्ठ-वि०, पृ० ७६।

५. व्यायोगे तूद्धतो नेता वृत्तं प्रख्यातमीरितम्।
—मन्दारमरन्दचम्पूः, सप्तम-वि०, पृ० ७२।

६. विख्यातवृत्तो व्यायोगो विख्यातोद्धतनायकः।
—साहित्यसारे, षष्ठ-प्रवासे, पृ० ६४।

व्यायोगनायकविषयकाचार्यमतानामुपर्युक्तसंक्षिप्तस्वरूपमधस्तनतालिकयोपस्थातुं शक्यते—

| आचार्यनाम ग्रन्थनाम च | नायकः | संख्या | विशेषः |
|---|---|---|---|
| १–भरतः––नाट्यशास्त्रम् | प्रख्यातनायकः | — | दिव्यनायकत्वं राजर्षिनायकत्वं च निषिद्धम् |
| २–अभिनवगुप्तः—अभिनवभारती | अमात्यसेनापतिप्रभृतयः | द्वादश | ,, ,, ,, |
| ३–विष्णुधर्मोत्तरपुराणम् | — | एकः | — |
| ४–धनञ्जयः(धनिकश्च)दशरूपकम् | प्रख्याता उद्धताश्च (धीरोद्धताः) नराः | –– | नायकबहुलता अदिव्यनायकता |
| ५–सागरनन्दी—नाटकलक्षणरत्नकोषः | प्रख्यातः | — | सामान्यतो भरतानुकरणम् |
| ६–हेमचन्द्रः—काव्यानुशासनम् | — | — | सर्वांशतः भरतानुकरणम् |
| ७–रामचन्द्रः गुणचन्द्रः—नाट्यदर्पणः | प्रख्यातसेनापतयोऽमात्या वा उद्धताः | — | केषाञ्चिद् आचार्याणां मते द्वादशनायकाः। देवादीनां राज्ञाञ्च नायकता निषिद्धा दशाधिकसंख्या न वाञ्छिता |
| ८–शारदातनयः––भावप्रकाशनम् | धीरोदात्तकोटिकाः प्रख्याता देवा राजर्षयो वा | त्रयः चत्वारः पञ्च वा | जामदग्न्यजये (व्यायोगे) उद्धतः परशुरामो नायकः |
| ९–शिङ्गभूपालः—रसार्णवसुधाकरः | निस्सहायः | एकः | दश अवराः ख्याता उद्धताः प्रतिनायकाः |
| १०–विद्यानाथः—प्रतापरुद्रीयम् | उद्धतो धीरोद्धतकोटिकः प्रख्यातः | — | संख्योल्लेखो न |
| ११–विश्वनाथः—साहित्यदर्पणः | राजर्षिः दिव्यो वा | — | भरतभिन्नता नायकसंख्याद्युल्लेख उदा० सौगन्धिकाहरणम् |
| १२–शुभङ्करः—सङ्गीतदामोदरम् | दिव्यो राजर्षिर्वा | दशाधिका नराः | विश्वनाथ-शारदातनयमतसादृश्यम् |
| १३–अभिनवकालिदासः––नञ्जराज–यशोभूषणम् (नरसिंहकविः) | धीरोद्धतकोटिकः | | संख्याद्युल्लेखो न नायकसंख्याद्युल्लेखो न |

१४-श्रीकृष्णकविः--मन्दारमरन्दचम्पूः उद्धतः — मतं विद्यानाथसदृशम् ।
१५-सर्वेश्वराचार्यः--साहित्यसारः ख्यातोद्धतः — नायकसंख्याद्युल्लेखो न ।

उपर्युक्तरीत्याऽऽचार्याणां व्यायोगविषयकमतपर्यालोचनेन निष्कर्षतो वक्तुमिदं सुकरं यदाचार्यभरतेन केवलं व्यायोगनायकस्य प्रख्याततत्वमभिधाय नायकस्वरूपविषये मौनमेवाश्रीयते। तेन दिव्यनायकत्वं राजर्षिनायकत्वं च निषिध्यान्यत्किञ्चित्प्रत्यक्षतो नोक्तम्। आचार्यसागरनन्दी हेमचन्द्रश्च भरतमतमेवावलम्बेते। आचार्यभरतमतं स्पष्टीकुर्वताऽऽचार्याभिनवगुप्तेनामात्यसेनापतिप्रभृतयो व्यायोगनायकत्वेनाङ्गीकृताः। नाट्यदर्पणकाराणां मतेऽपि तदुक्तामात्यादीनां व्यायोगनायकता भवितुमर्हति। तैरपि देवस्य भूपतेश्च नायकता नोरीक्रियते। एतद्विपरीतं विश्वनाथशारदातनयशुभङ्क-रादयो देवादीनां राज्ञाञ्च नायकत्वमुरीकुर्वन्ति।

यथोक्तमाचार्यभरतेन व्यायोगनायकस्य धीरोदात्तादिस्वरूपविषये न किमपि प्रतिपादितम्। अभिनवभारतीकारेणाभिनवगुप्तेनापि मौनावलम्बनमेव कृतम्। एवमेव सागरनन्दी, हेमचन्द्रः, शिङ्गभूपालः, शुभङ्करश्च तत्स्वरूपविषयकं स्वमतं न प्रकाशितवन्तः। धनञ्जयः, विद्यानाथः, विश्वनाथः, अभिनवकालिदासः, श्रीकृष्ण-कविः, सर्वेश्वराचार्यश्च व्यायोगनायकस्योद्धतस्वरूपं स्वीकुर्वन्ति। शिङ्गभूपालेन केवलं व्यायोगनायकविषये 'निस्सहायः' इति शब्द उल्लिखितः। एवमेव विद्यानाथः, अभिनव-कालिदासः, श्रीकृष्णकविः, सर्वेश्वराचार्यश्च नायकस्योद्धतत्वमेवोरीकुर्वते। को नायको भवितुमर्हति व्यायोगस्य ? ते न किञ्चिदप्युक्तवन्तः। एतेषां समेषामाचार्याणां मध्ये शारदातनय एवैकाक्याचार्यो यो व्यायोगनायकस्य धीरोदात्ततां स्वीकुरुते।

व्यायोगनायकस्य संख्याविषये प्रायो नाट्याचार्यैः स्पष्टं मतं न प्रकाशितम्। संख्याविषये भरतेनापि स्पष्टतो न किमप्युक्तम्। परञ्च 'यथा समवकारे' इति भरतोक्त-वचनेनाचार्याभिनवगुप्तेन व्यायोगनायकस्य द्वादशेति संख्या साधिता। विष्णुधर्मोत्तर-पुराणस्य शिङ्गभूपालस्य च मते व्यायोग एकः, शुभङ्करमते दशाधिकाः, शारदातनयस्य मते च त्रयः, चत्वारः, पञ्च वा नायका भवितुमर्हन्ति। तस्य विचारे नायकसंख्या दशाधिका भवितुं न युज्यते। अन्यैराचार्यैः व्यायोगनायकसंख्याविषये मौनाव-लम्बनमेव कृतम्। एतद्विषयकं शारदातनयस्य मतमपि विशेषरूपतां भजते। तन्मते नायकसंख्या विकल्पतां याति। नाट्यदर्पणकारस्यापि नायकसंख्याविषयकं मतं समुल्लेख्यम्। तेन 'एतेन पुरुषपात्रबाहुल्य लभ्यते' इति वचनेन व्यायोगे पात्रबाहुल्यं तु स्वीक्रियते; परन्तु संख्योल्लेखो न क्रियते। यद्यपि तेनान्याचार्यद्वादशनायकविषयक-मतस्योल्लेखो विधीयते, परन्तु तेनापि नायकसंख्याविषयकं तन्मतं प्रकाशतां न याति। इत्थं नायकसंख्याविषयेऽधिकसंख्याका आचार्या मौनावलम्बिता एव दृश्यन्ते।

एतेषां समेषामाचार्याणां व्यायोगविषयकमतविमर्शेन ज्ञायते यद् व्यायोगा-भिधानरूपकोदाहरणत्वेन प्रायश आचार्यैर्नोद्धृतः कश्चिद् व्यायोगः। केवलं धनञ्जयेन नाट्यदर्पणकारैश्च क्रमशो जामदग्न्यविजयस्य, जामदग्न्यजयस्य तथा विश्वनाथेन

सौगन्धिकाहरणस्य चोदाहरणं समुद्धृतम् अस्ति। जामदग्न्यविजयस्य जामदग्न्यजयस्य वा नायकभूतस्य परशुरामस्य दिव्यत्वविषये न कोऽपि बाधो दृश्यते। अस्यां दशायां व्यायोगे दिव्यत्वनायकनिषेधः कथं सङ्गतिं गच्छेदिति विचार्यम्।

सन्दर्भेऽस्मिन् ध्येयमिदं यदेकाकिना शिङ्गभूपालेन व्यायोगे दशसंख्याका निकृष्टा उद्धतकोटिकाः प्रतिनायका अङ्गीकृताः। प्रतिनायकानामीदृश उल्लेखोऽन्यत्र कुत्रापि न जातः। व्यायोगनायकस्य विषये किमप्यनुक्त्वा प्रतिनायकस्य कोटयुल्लेखो नितरां चिन्त्यः। किन्नामकं व्यायोगं लक्ष्यीकृत्य शिङ्गभूपालेन प्रतिनायकोल्लेखो विहित इत्यपि विचार्यमिति शम्।



# भट्टनायकभुक्तिवादस्तद्गतदर्शनप्रभावश्च

डॉ० स्वामीनाथगुप्तः

प्राध्यापकः,

दयानन्दमहाविद्यालये

आजमगढ़

❁ ❁ ❁

रसनिष्पत्तिः संस्कृतकाव्यशास्त्रस्यात्यन्तमहत्त्वपूर्णविषयोऽस्ति। रसेतिहासारम्भो रसपरिभाषया तत्स्वरूपेण वा न हि; अपि तु रसनिष्पत्त्या प्रारभ्यते। संस्कृतकाव्यमवलम्ब्योपलब्धमादौ भरतनाट्यशास्त्रं विषयस्यास्य प्रबलप्रमाणमस्ति[1]। तद्रससूत्रप्रयुक्तसंयोगनिष्पत्तिशब्दयोर्भारतीयदर्शनानुरूपिण्यो व्याख्याः समासाद्यन्ते।

भारतीयदर्शनग्रन्थेषु "संयुक्तव्यवहारहेतुः संयोगः" इत्युभयपृथग्द्रव्यसम्बन्ध्यसमानाधिकरणत्वं संयोगत्वमुच्यते। कारणकार्यसम्बन्धसंयोगो नास्ति। पृथगस्तित्वसम्भवाद् भरतरससूत्रे निष्पत्त्यर्थमुत्पत्तिरस्ति। भारतीयदर्शनसम्प्रदायेषु कारणात् कार्योत्पत्तिचर्चायां चर्चितं यत् कारणस्य कार्येणाऽनन्यथासिद्धनियतपूर्ववृत्तिसम्बन्धो भवति[2]। तथा कारणसामग्र्युपस्थित्या सहैव कार्योत्पत्तिप्रतिबन्धकाभावोऽप्यावश्यकः; किन्तु भरतरससूत्रप्रयुक्तसंयोगशब्दो दर्शनसंयोगशब्दात् सर्वथा भिन्नोऽस्ति, तस्य विभावानुभावव्यभिचारिभावपदार्थत्वाभावात्। सार्द्धमेव तस्योदाहरणमाध्यमेन संयोगस्पष्टीकरणं त्विदमेवाभिव्यनक्ति यद् विभावादीनां परस्परसंयोगो नानाव्यञ्जनौषधिसंयोग इव पृथग्भावाऽसहोऽस्ति। एतदेव नाट्यशास्त्रे स्पष्टमुल्लिखितम्[3]। दर्शनसंयोगस्तु पृथग्द्रव्यविद्यमानसम्बन्धोऽस्ति। एवं भरतस्य निष्पत्तिरपि दर्शनस्योत्पत्तिनिकषोपले नहि कषणीया। यतो हि घटनिर्मितिपूर्वं मृत्तिकादीनां विद्यमानत्वमिव निष्पत्तिपूर्वं विभावादयो नहि विद्यन्ते, न च रसो घटादिरिव दृग्गोचरः। अतो भरत-

---

१. विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः। (ना० शा०, पृ० २७२)

२. अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत् ..... ... ..... .......... .....॥ (न्या० सि० मुक्ता० ६)

३. यथा हि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिस्तथा नानाभावोपगमाद्रसनिष्पत्तिः। यथा हि--गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति। (ना० शा०, भा० १, पृ० २८७–८८)

निष्पत्तिशब्दस्पष्टीकरणमपि दार्शनिकप्रभावशून्यमस्ति। भरतकाले यद्यपि भारतीय-दार्शनिकचेतना स्वविकसितावस्थां नान्वभवत्, तथापि भरतः संयोगनिष्पत्तिशब्दयो-र्व्याख्यां दार्शनिकरूपेणाभिधाय लौकिकव्यावहारिकरूपाभ्यां सम्भवतोऽनेनेव कारणेन चकार यत् तत्काले दर्शनं जीवनाद् दूरमेव विकसन्नलक्ष्यत। डॉ० कान्तिचन्द्रपाण्डेयोऽपी-दमेवोल्लिखति यद् भरते कोऽपि दार्शनिकवादप्रभावो नहि परिलक्ष्यते[१]।

भरतरससूत्रप्रयुक्तसंयोगनिष्पत्तिशब्दयोर्व्याख्याया आवश्यकतामनुभवद्भिश्चिन्तन-सूक्ष्मदार्शनिकशैलीपरिचितैर्विद्वद्भिरेतयोः शब्दयोर्दार्शनिकव्याख्या विभिन्नविद्वन्मत-भेदालोचनप्रेरणाभूता कृता। भट्टलोल्लटः, शङ्कुकः, भट्टनायकः, अभिनवगुप्तश्चेति चत्वारः प्रमुखाचार्या बभूवुः।

भरतरससूत्रस्य तृतीयप्रमुखव्याख्याता भट्टनायकोऽस्ति। पूर्वं भट्टलोल्लट-शङ्कुकाभिनवगुप्तैः रसस्योत्पत्त्यनुमित्यभिव्यक्ति[२]परकव्याख्या विभाविता। भट्टनायक एतानि मतानि निराकृत्य भुक्तिवादनामकं नवीनं सिद्धान्तं परिकल्प्य वक्ति। नहि रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते। स रस[३]स्वगतपरगत[४]प्रतीतौ विप्रतिपत्तीः प्रदर्शयति।

[५]लोचनाभिनवभारती[६]काव्यप्रकाश[७]धारैरस्य विषये वक्तुं शक्यते यदनेन

---

१. But he has not accounted ..... ..... ..... .....and philosophically for the appearance of all the constituents of aesthetic representation in the spectators consciousness, because he was primarily dramaturgist and not a philosopher or prychologist (comparative Aesthetics, P. 44)

२. काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥ (ध्व० लो० १।५)

३. भट्टनायकस्त्वाह—रसो न प्रतीयते। नोत्पद्यते, नाभिव्यज्यते, स्वगतत्वेन हि प्रतीतौ करुणे दुःखित्वं स्यात्। ..... .... स्वगतपरगतत्वादि च पूर्ववद्विकल्प्यम्।
(अभि० भा०, भाग १, पृ० २७६)

४. ननूक्तं भट्टनायकेन—रसो यदा परगततया प्रतीयते तर्हि ताटस्थ्यमेव स्यात्। (लोचने, पृ० १९०–९१)

५. तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम् ... ..... निजचित्स्वभाव-निर्वृत्तिविश्रान्तिलक्षणः परब्रह्मास्वादसविधः।(तत्रैव, पृ० १९३)

६. तस्मात् काव्ये दोषाभावगुणालङ्कारमयत्वलक्षणेन नाट्ये चतुर्विधाभिनयरूपेण निविड-निजमोहसंकटकारिणा ..... ..... भोगेन परं भुज्यत इति।
(अभि० भा०, भा० १ पृ० २७७)

७. न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते ... ... भोगेन भुज्यत इति भट्टनायकः।
(काव्यप्रकाशे, पृ० १०७)

काव्येऽभिधामतिरिच्य भावकत्वभोजकत्वे द्वौ नवीनौ व्यापारौ परिकल्पितौ। भावकत्वव्यापारकार्यं नाट्यविभावादिकं सामान्यं विधाय भोजकत्वव्यापारेण सहृदयसामाजिकेभ्यो रसभुक्तिमात्रमेवाऽस्ति। भोगोऽयमनुभवस्मरणाभ्यां विलक्षणो द्रुतिविस्तरविकासरूपो रजस्तमोवैचित्र्यानुविद्धसत्त्वमयचित्तस्वभावो निवृत्त्यानन्दरूपः परब्रह्मास्वादसहोदररूप एवं विश्रान्तिविगलितविभेद्यान्तरस्थिररूपोऽस्ति। संक्षेपेणेदमेव भट्टनायकरसविषयकमतं यत् संयोगात्[1] पदस्यार्थो भोज्यभोजकभावसम्बन्धस्तथा निष्पत्तिपदस्यार्थो भोग आस्वादनं वास्ति। अतो मतमिदं रसभुक्तिवाद उच्यते।

भट्टनायकरसव्याख्याया दार्शनिकाधारोऽस्ति विवादास्पदम्। केचन विद्वांसोऽस्य रससिद्धान्तसम्बन्धं केवलमेकेनैव दर्शनेन मन्यन्तेऽपरे दर्शनद्वयेन दर्शनत्रयेण वा तदत्र प्रपञ्चः।

**भट्टनायकभुक्तिवादाधारः सांख्यदर्शनम्—**

अत्र पक्षे [2]गोविन्दठक्कुर-विश्वेश्वरपाण्डेय[3]-ए० शङ्करन्[4]–एस० के० डे[5]-[6]आचार्यविश्वेश्वर–[7]आनन्दप्रकाशदीक्षिताः सन्ति। इमे भोगव्याख्याप्रयुक्तसांख्य-

---

१. भट्टनायकस्तु स्थायिनो विभावादीनां च भोज्यभोजकभावसम्बन्धाद्रसस्य निष्पत्तिर्भोग इति सूत्रार्थः। ( रसचन्द्रिकायाम्, पृ० ४५ )

२. भोगश्च सत्त्वगुणोद्रेकात् प्रकाशते य आनन्दस्तत्स्वरूपा ..... ... सांख्यसिद्धान्तानुसारेण विवृणुते ( प्रदीपे, का० प्र०, पृ० ६६ )।

३. स्थायिनो भावकत्वव्यापारेण साधारणीकृतत्वात् सत्त्वादीनां त्रयाणामुद्रेके ..... ..... इति सांख्यसिद्धान्तादिति व्याचख्यौ। (रसचन्द्रिकायाम्, पृ० ४६)

४. For this conception of Bhoga Bhatta Nayaka oppears to have taken the..... ..... .....the Sankhya philosophers.
( Some concepts of Alankarashastra, p. 103)

५. (a) Bhatta Nayaka seems to follow the Sankhya doctrine.
S. K. De, C. Some problems of Sanskrit Poetics, p. 20 )
(b) Bhatta Nayaka in his Peculiar theory of aesthetic engoyment (Bhoga) is subatantially following the teaching of Sankhya philosopher.
( S. K. De, History of Sanskrit Poetics, Vol. II, P. 12)

६. आचार्यविश्वेश्वरः, का० प्र०, पृ० १०७।

७. रससिद्धान्ते, आनन्दप्रकाशदीक्षितः, पृ० ८१।

प्रकृतेः सत्त्वरजस्तमसां प्रयोगेण सिद्धान्तमिममामनन्ति। गणेशशास्त्री चापि अभिनव-भारतीपङ्क्तीः समाश्रित्य[1] भट्टनायकभोगव्याख्यां सांख्यदर्शनाश्रितां मन्यते[2]।

सांख्यदर्शनानुसारेणेमे त्रयो गुणाः प्रतिव्यक्ति विद्यमाना भवन्ति; किन्तु सुखानुभूतिकाले सत्त्वगुणोद्रेको रजस्तमसी अभिभावयति। अयमेव भट्टनायकभोगः। त्रिगुणात्मकप्रकृतिप्रभाववशात् पुरुषोऽपि नानारूपैरभिव्यज्यते। इमे गुणा भिन्ना अपि प्रदीपवत् प्रकाशं [3]जनयन्ति। बुद्धौ यदेन्द्रियैर्विषयविशेष उपस्थाप्यते, तदैव पुरुषोऽपि तेन संयुनक्ति। बुद्धिप्रतिबिम्बितविषयाणां चेतनपुरुषारोपेण पुरुषस्तान् स्वसम्बद्धान्नवगच्छति। अयमेव पुरुषकृतविषयभोगो रसानुभूतावपि। विभावादिसाधारणीकरण-भावकत्वव्यापारा इव सत्त्वबहुलबुद्धौ समारोपिता विभावरत्यादिभावसंवलिता पुरुषावस्थैव तत्कृतरत्यादिभावभोगोऽस्ति। सत्त्वगुणस्य लघुप्रकाशकत्वाद् भोगोऽयं प्रकाशात्मिकैवमनुभूतिरस्ति। यस्यां सत्त्वधर्मसुखस्यैवानुभवो नहि रजस्तमःसन्निकर्षेण दुःखादीनाम्।

सांख्यदर्शनाश्रितस्य भट्टनायकसिद्धान्तस्य स्वीकार इमा विप्रतिपत्तयः सन्ति—

(१) अभिनवगुप्तप्रस्तुतभट्टनायकसिद्धान्ते[4] "भोगः" अनुभवस्मृत्यादिज्ञान-सामान्यरूपेभ्यो भिन्नः, एवं चित्तद्रुतिविस्तारविकासदशाभिर्युक्तो भवति। चित्तस्येमा दशाः सत्त्वरजस्तमसां नहि कारणं वक्तुं शक्यन्ते सत्त्वस्योद्रेकत्वात्।

(२) रसभोगाय प्रकाशानन्द इति कथनं सांख्यदृष्टयानुपपन्नं प्रकाशानन्दाय विशुद्धसत्त्वावकाशत्वात्; किन्त्वत्र रजस्तमोऽनुविद्धसत्त्वोद्रेकिचित्तनिरूपणमस्ति।

(३) रसदशायाः परब्रह्मास्वादसविधकथनमपि सांख्यदृष्ट्यानुपपन्नम्।

(४) सांख्यदृशा रससंविद्विश्रान्तिरपि वैषयिकसंस्पर्शेन नहि सम्भविनी। सांख्ये प्रवृत्तिविकारभूतचित्तमनुभवादिसमस्तप्रक्रियाधारोऽस्ति, निःसङ्गश्च पुरुषः; किन्तु

---

१. ..... ..... सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादसविधेन भोगेन परं भुज्यत इति। (अभि० भा०, भा० १, पृ० २७७)

२. **Bhatta Nayaka it seems, in his exposition of aesthetic (Bhoga) mainly follows the teaching of Sankhya philosophy.**
**(The philosophy of Aesthetic pleasure, P. 139)**

३. सांख्यकारिका—१२।

४. भाविते च रसे तस्य भोगो योऽनुभवस्मरणप्रतिपत्तिभ्यो विलक्षण एव द्रुतिविस्तर-विकासात्मरजस्तमोवैचित्र्यानुविद्धसत्त्वमयनिजचित्स्वभावनिर्वृत्तिविश्रान्तिलक्षणपर-ब्रह्मास्वादसविधः। (लोचने, पृ० १९३)

भट्टनायकरससिद्धान्तवर्णितसंविद्वैषयिकसंस्पर्शान्नहि निःसङ्गः पुरुषः । संक्षेपेण भट्टनायकभुक्तिवादे सांख्यगुणवादप्रभावो रजस्तमोऽनुविद्धसत्त्वोद्रेकिचित्तविवेचनान्न ह्यग्रेसरः ।

**भट्टनायकभुक्तिवादाधारो मीमांसादर्शनम्—**

आचार्याभिनवगुप्तो [1]लोचनाभिनवभारत्योर्भट्टनायकं जैमिनिमतानुयायिन-मुक्त्वा मीमांसकभावनासिद्धान्तं तद्रसव्याख्याघटितं प्रतिपादितवान् । अतः पूर्वमीमांसाया भावनावाद एव प्रथमं प्रकाशतेऽत्र ।

**पूर्वमीमांसा–भावनावादः**—भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापार-विशेषः[3]। यज्ञेन स्वर्गप्राप्तिरिति सामान्यवाक्यम् । भावनाक्रियावादि-मीमांसको यज्ञेन स्वर्गो भावितो भवतीति वक्ति । क्रियैव भावना, सा द्विविधा[4]—शाब्दी, आर्थी च । शाब्दी भावना सा या लिङ्त्वांशैरुच्यते । लिङ्श्रवणेऽयं मां प्रवर्त्तयतीत्यतो मत्प्रवृत्त्य-नुकूलव्यापारवानयमित्यस्य नियमेन प्रतीतिः । अनेन शब्देन यन्नियमतः प्रतीतिस्तत्तस्य वाच्यं यथा गामानयेति वाच्यं गोशब्दस्य गोत्वं शाब्द्यां भावनायां साध्यविषये तिस्रोऽपेक्षा भवन्ति[5] । सांख्यसाधनेतिकर्तव्यता । प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावनालक्षणम्[6] । आर्थ्यां भावनायामपि[7] शाब्दभावनेव साध्यसाधनेतिकर्तव्यताऽ-

---

१. न च निःश्वासेनान्ध इवादर्शः स इव चन्द्र इति कल्पना युक्ता । जैमिनीयसूत्रे ह्येवं योज्यते, न काव्येऽपीत्यलम् । ( लोचने, पृ० १८१ )

२. यत्तु भट्टनायकेनोक्तं सिद्धेरनटादेरङ्गत्वं व्रजन्त्यास्तत्पक्षेऽयमिति केवलं जैमिनिनानु-सृतमित्यलमनेन । ( अभि० भा०, भाग ३, पृ० ३०९–१० )

३. भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः । (अर्थसंग्रहे, पृ० १२)

४. सा द्विधा–शाब्दी भावना, आर्थी भावना चेति । शाब्दी भावना तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः । सा च लिङ्त्वांशेनोच्यते । "लिङ्श्रवणेऽयं मां प्रवर्त्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानयम्" इति नियमेन प्रतीतेः । यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम् । यथा 'गामानय' इत्यस्मिन् वाक्ये गोशब्दस्य "गोत्वम्" । (तत्रैव— पृ० १२–१३ )

५. सा च भावनांशत्रयमपेक्षते– (१) साध्यम, (२) साधनम्, (३) इतिकर्तव्यतां च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ? इति । ( तत्रैव, पृ० १७)

६. प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना । (तत्रैव, पृ० २१)

७. साप्यंशत्रयमपेक्षते—(१) साध्यम्, (२) साधनम्, (३) इतिकर्तव्यतां च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ? इति । (तत्रैव, पृ० २४)

पेक्षते। यथा यजनक्रिया[1] साध्यं स्वर्गादयः। यज्ञं तत्साध्यस्य साधनं करणं वा। प्रयाजादयो यज्ञक्रियाकलापा इतिकर्तव्यताः।

आचार्याभिनवगुप्तो लोचने[2] मीमांसाभावनां भट्टनायकरससिद्धान्तपक्षे चर्चयन् साध्यं रसः, साधनं व्यञ्जनाम्, इतिकर्तव्यतां गुणालङ्काराद्यौचित्यं स्वीकरोति। भट्टनायकः शब्दस्य व्यापारत्रयमभिधाभावनाभोगीकरणानि मिनोति। तेषु[3] वाच्यार्थ-वाच्यालङ्कारादयोऽभिधाविषयरूपेणोपतिष्ठन्ते। अनेनैव भावनाव्यापारेण शृङ्गारादि-रससमूहो भावितो भोगीकरणरूपसिद्धिरुपयुक्तपुरुषैर्विशेषरूपेणानुभूयते।

भट्टनायकभुक्तिवादो मीमांसकभावनापक्षदर्शनेन प्रतीयते यद् भावनासामा-न्यस्य त्रिभिरंशैः रसः साध्यं विभावादिसाधनं तथा साधारणीकरणमितिकर्तव्यतां मीयते; किन्तु अभिनवगुप्तेन यद्व्यञ्जनासाध्यं मन्यते तद् भट्टनायकमतेनानुपपन्नम्, भट्टनायकेन व्यञ्जनाव्यापारस्यामान्यत्वात्। शाब्द्यार्थीभावनारूपेण भट्टनायकसिद्धा-न्तालोचनेऽपि न रसस्य शाब्दी भावना युक्ता न चार्थी भावना, शाब्दभावनायां शब्द-श्रवणादिनार्थस्य नियमेन प्रतीयमानत्वात्। यथा गोशब्देन गोत्वस्य; किन्तु रसप्रसङ्गे नहि शब्दश्रवणेन नियमतो रसप्रतीतिर्न हि रसो विभावादिवाच्यम्।

भट्टनायकरससिद्धान्तार्थीभावनाऽपि न हि समीचीना, आर्थीभावनाया अर्थविषयक-व्यापारत्वाद् यत्रोक्तं प्रयोजनस्य स्वर्गादिरूपफलस्य इच्छा रागविशेषः फलेच्छा-साधनमुपसंक्रामतीति न्यायेन। तेन च रागविशेषेण जनितो यो यागादिरागविषयः पुरुषस्य व्यापारविशेषः सार्थीभावनेत्यर्थः[4]। यथा स्वर्गादीच्छुको यज्ञादिव्यापारविशेष-

---

१. तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति। (तत्रैव, पृ० २४–२५)

२. तस्माद्व्यञ्जकत्वाख्येन व्यापारेण गुणालङ्कारौचित्यादिकमितिकर्तव्यतया काव्यं भावकं रसान् भावयतीति त्र्यंशायामपि भावनायां करणांशे ध्वननमेव निपतति। ( लोचने, पृ० २०० )

३. अभिधा भावना चैव तद्भोगकृतमेव च।
अभिधाधामतां याते शब्दार्थालङ्कृती ततः॥
भावनाभाव्य एषोऽपि शृङ्गारादिगणो न(हि) यत्।
तद्भोगीकृतरूपेण व्याप्यते सिद्धिमान् नरः॥ (अभि० भा०, भाग १, पृ० २७७)

४. प्रयोजनस्य स्वर्गादिरूपफलस्य येच्छारागविशेषः फलेच्छासाधनमुपसंक्रामतीति न्यायात्, तेन च रागविशेषेण जनितो यो यागादिक्रियाविषयः पुरुषस्य व्यापारविशेषः साऽऽर्थी भावनेत्यर्थः। (अर्थसंग्रहे, टीकाकारः रामेश्वरभिक्षुः, पृ० २१)

प्रवृत्तो व्यक्तिरेव न हि तथा काव्यपक्षेऽत्र सामाजिकस्येच्छाश्रयत्वान्नटादिरङ्गमञ्चीय-पात्राणां व्यापारविशेषकत्वाच्च। सामाजिकस्तु निष्क्रियश्श्रोतैव द्रष्टृमात्रमेव। अत एव वक्तुं शक्यते यन्मीमांसाभावनावादो भट्टनायकभुक्तिवादे न हि सुचारुरूपेण घटते।

**भट्टनायकभुक्तिवादाधारो वेदान्तदर्शनम्—**

डॉ० राममूर्तित्रिपाठी स्वग्रन्थे रसविमर्शाख्ये साध्यायास्मै यतते यद् भट्टनायक-रसव्याख्यायामद्वैतवेदान्तप्रभावोऽस्ति, तदत्र[1] तर्काः—

(१) लोचनाभिनवकाव्यप्रकाशेषूपलभ्यमानभोगसिद्धान्ताधारेणाद्वैतवादभूमिका-स्थितोऽयं प्रतिभाति।

(२) काव्यप्रदीपविख्यातप्रभाटीकाकारवैद्यनाथपायुगुण्डे प्रदीपकारसांख्यपर-कोक्तिविपरीतं पूर्णतोऽद्वैतवेदान्तालोके व्याकुर्वन् काव्यरसमात्मानन्देन सम्बन्धेन वक्ति यत्सत्त्वोद्रेकेन चैतन्यात्मकानन्दावरणं दूरीभवति तथा निरावरणं चैतन्यानन्दसंवलित-स्थायिभावस्य रसात्मकभोगो भवति।

**भट्टनायकभुक्तिवादाधारः शैवदर्शनम्—**

काव्यप्रकाशस्य हिन्दीव्याख्याकारो डॉ० सत्यव्रतसिंहो भट्टनायकरससिद्धान्तं शैवदर्शनाश्रितं मन्यते[2]।

(क) महाशैवदार्शनिकाभिनवगुप्तेनेश्वरप्रत्यभिज्ञाविमर्शिन्यामभिनवभारत्याञ्चा-नेकस्थलप्रतिपादितसंविद्विश्रान्तिविमर्शरूपाऽहंरूपादेवानन्दमयम्। भट्टनायकोऽपि भोगस्वरूपं दर्शयन् संविद्विश्रान्तिशब्दं प्रयुङ्क्ते।

(ख) रसव्याख्याप्रयुक्तसत्त्वरजस्तमःस्वरूपमीश्वरप्रत्यभिज्ञाविमर्शिन्यनुरूपमस्ति।

किन्तु भट्टनायकभोगसिद्धान्तः शैवदर्शननिकषोपले न हि तथ्यतामाप्नोति। शैवदर्शनमनुसृत्य सत्त्वरजस्तमसां परिणामसुखदुःखमोहातिरिक्तं नान्यद् भोग इति। विषयीविशेषानुभूतिस्वरूपभोगो विषयीविषयद्वैतबोधकोऽस्ति; किन्त्वभिनवगुप्तः परब्रह्मा-स्वादसहोदर इत्युक्त्वा गुणातीतं मन्यते। विश्रान्तिकथनेनेयं शैवभोगस्थितिर्न हि; अपि तु भोगस्थितिर्भवति। परं भोगस्तु केवलं निरपेक्षानन्दोऽस्ति, आत्मस्थात्, अतो नहि भट्टनायकभुक्तिवादः शैवदर्शनाश्रित इति।

---

१. रसविमर्शे, पृ० २६–३०; तत्रैव पृ० २७।

२. डॉ० सत्यव्रतसिंहः, का० प्र०, पृ० ७४।

**भट्टभुक्तिवादाधारः सांख्यमीमांसादर्शने—**

म०म० पी० वी० काणेमहोदयो भट्टनायकरससिद्धान्ते सांख्यमीमांसादर्शनप्रभावं मन्यते[1]। अभिनवगुप्तः प्रस्तुताभिनवभारतीलोचनयोरुद्धरणाभ्यामेव मीमांसकभावनावादाधारेण भट्टनायकसिद्धान्तं मीमांसाश्रितं भुक्तिवादं च सांख्याश्रितमङ्गीकरोति। भट्टनायकरसव्याख्यायाः सांख्यमीमांसकतत्त्वे सम्भाविता विप्रतिपत्तयः पूर्वमेव कथितास्तदत्राऽपि घटन्ते।

**भट्टनायकभुक्तिवादाधारः सांख्यवेदान्तदर्शने—**

डॉ० कान्तिचन्द्रपाण्डेयः स्वशोधग्रन्थे स्वतन्त्रकलानाम्नि वक्ष्यमाणोक्तीभ्यां भट्टनायकं वेदान्तप्रभावितं स्वीकरोति।

(क) भट्टनायको भरतनाट्यशास्त्रस्य सर्वप्रथमश्लोकस्य 'ब्रह्मणा यदुदाहृतम्' इत्यस्य वेदान्तानुरूपव्याख्यां तनोति[2]।

(ख) आनन्दशब्दप्रयोगो विशुद्धशब्दप्राधान्यं प्रतिपादयति यत् केवलं वेदान्तप्रभाववशात् सम्भवति[3]। भट्टनायकभोगस्तेन सांख्यानुसारी स्वीकृतः।

**भट्टनायकभुक्तिवादाधारः शैवमीमांसादर्शने—**

डॉ० प्रेमस्वरूपगुप्तो[4] भट्टनायकभावकत्वव्यापारं मीमांसाभावनावादप्रभावितं मन्यमानो वक्ष्यमाणतर्कैस्तद्भोजकत्वव्यापारं शैवदर्शनाश्रितमवोचत्—

(क) भट्टनायकस्य कतिपयश्लोकाः शैवागमिकैरुद्धृताः।

(ख) अभिनवगुप्तप्रस्तुतभट्टनायकमतव्याख्या शैवसिद्धान्ताश्रितैव।

(ग) ब्रह्मणा यदुदाहृतमित्यस्य व्याख्या शैवागमानुसारिणीत्यपि साध्वी। अत्र भोगशब्दस्य शैवदर्शनमनुश्रित्य व्याख्यायामनुपपत्तयः प्रदर्शिताः। "ब्रह्मणा यदुदाहृतम्" इत्यस्य व्याख्याप्रसङ्गेन कथयितुं शक्यते यद्यदि भट्टनायकदृष्टिः शैवी भवेत् तर्हि नाट्यशास्त्र-प्रथमश्लोकव्याख्यायां जगत्कल्पनाभागो निःसारो नेत्युच्येत। अभिनवगुप्तेन कृता भट्टनायकमतानां शैवाधारिणी टीका नहि पुष्टा, यतो हि यदि शैवदार्शनिकाचार्यमतं पण्डितराजजगन्नाथेन वेदान्तानुगुणं व्याख्यातं तर्हि शैवत्वादभिनवगुप्तोऽपि भट्टनायकव्याख्यां शैवानुरूपिणीं कर्तुं शक्नोति स्म। उद्धरणप्रस्तुतीकरणमप्यपुष्टं कस्याप्युद्धरणविशेषस्य कुत्रापि पुष्ट्यै स्थापनत्वात्।

---

१. "न च ··· कल्पना युक्ता। जैमिनिसूत्रे ह्येतं योज्यते न काव्येऽपीत्यलम्", इत्युपरि। (पी० वी० काणे, संस्कृत-का० शा० इति० पृ० २८०)

२. स्वतन्त्रकलाशास्त्रे, पृ० १०१।

३. तत्रैव, पृ० १०६-१०७।

४. रसगङ्गाधर का शास्त्रीय अध्ययन, पृ०, १६२–१६५।

**भुक्तिवादाधारो मीमांसावेदान्तसांख्यदर्शनानि—**

रसचन्द्रिकाकारः पण्डितविश्वेश्वरपाण्डेयो भट्टनायकरससिद्धान्तं भावनाधारेण मीमांसया, सत्त्वरजस्तमोगुणाधारेण सांख्येन, भोगाधारेण च वेदान्तेन मन्यते। अत्र सम्भाविता विप्रतिपत्तयः प्रतिपादिताः।

अतः सम्पूर्णविवेचनया संक्षेपेण वक्तुं शक्यते यद् भट्टनायकभुक्तिवादः सांख्यवेदान्तप्रभावित इति समीचीनं प्रतिभाति।



# ध्वन्यध्वावबोधः

डॉ० श्रीमती शैलकुमारीतिवारी
अनुसन्धात्री
काशी-हिन्दू-विश्वविद्यालये
वाराणसी

❀ ❀ ❀

अध्वा ध्वनेः कः प्रतिभापराणां
संगीयते यो नितरां प्रशस्तः ।
आलोच्य लेखैकधनान्नितान्तं
प्रस्तौति शैला विदुषां मुदे तम् ॥ १ ॥

ध्वन्यर्थबोधे विदुषां बहूनां
भ्रान्तिः सदा ताण्डवमातनोति ।
तस्या विलासं परिहर्त्तुकामा
चिन्वे तु यत्नं निजबोधगम्यम् ॥ २ ॥

तस्य ध्वनेः काव्यविदो महान्तो
नानार्थवां यत्नशतेन धीराः ।
कीरायमाणा ब्रुवते नितान्तं
तस्या निरासाय तनोमि यत्नम् ॥ ३ ॥

इह विरञ्चिप्रपञ्चे पतिता विविधप्रतिभाकाश्चेतनावन्तो मानवा दुःखापगमाय आनन्दसन्दोहावाप्तये नानायत्नानवलम्बते । कष्टं न कांक्षन्ते केचन सुखमीहन्ते च सर्वे । तदर्थमनेकधा यतन्ते । अधिकारिभेदात्केचिज्ज्ञानानन्दं केचन शब्दानन्दं केचिदनेके विशिष्टानन्दं केचन च सरलमतयः काव्यानन्दमीहन्ते । तत्रापि काव्यविशेषानन्दमनुभवन्ति । स च काव्यविशेषो ध्वनिनाम्ना प्रख्यातः । ध्वनिविषये च विप्रतिपत्तयः सन्त्यनेकाः । ध्वनिप्रतिपादकेष्वनेकेषु सत्सु ग्रन्थेषु प्राथम्यं भजमानो ध्वन्यालोकनामा आनन्दवर्द्धनाचार्यनिर्मितो ग्रन्थ एव काव्यविद्भिर्विद्वद्भिर्निश्चीयमानो भ्राजते । ध्वनिविषयिका विप्रतिपत्तय आनन्दवर्द्धनाचार्येण स्वकीये ध्वन्यालोकग्रन्थे मङ्गलपद्यान्ते निर्दिष्टाः । ताः स्वयमाचार्यो वक्ति --

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥

अयमभिप्रायः—काव्यतत्त्वविद्भिर्बहुभिर्बुधैः काव्यविवेचनावसरे काव्यस्य य आत्मा सारभागोऽथवा स्वभावो ध्वनिरिति संज्ञितो ध्वनिनामभाक् परम्परयाऽविच्छिन्न-धारया समाम्नातः सम्यग् उचितं शास्त्रकल्पनयाम्नात आ समन्ताद् म्नातः प्रकटितो निरूप्य प्रदर्शितः सहृदयजनमनःप्रकाशमानस्यापि अनुभूयमानस्य तस्य ध्वनेरन्येऽसहृदया अयुक्ताभिधायिनोऽभावं सत्ताराहित्यं जगदुर्बभाषिरे ध्वनेर्नामस्वरूपादीनामुल्लेखमेव ववचनापि स्वग्रन्थेषु न कृतवन्तः । ध्वनेरसत्तां स्वीकुर्वतां तेषाममी वक्ष्यमाणा विरुद्धा-स्तर्का अभावस्वीकरणसमर्थने हेतवः सम्भवन्ति स्वकृतध्वनिनिरूपणाभावं त एवं समर्थयेरन्नित्यर्थः ।

तत्र केचित्प्रथमेऽभाववादिन आचक्षीरन् शब्दार्थशरीरं शब्दश्चार्थश्चेत्युभौ शरीरं यस्य तत् तथाविधं तावद् निर्विवादं काव्यमस्ति । काव्यस्य शब्दार्थौ शरीरमिति मते तु कस्यापि विप्रतिपत्तिर्नास्ति । तत्र काव्यशरीरभूतयोः शब्दार्थयोस्तयोः शब्दगताश्चारुता-कारिणस्ते अनुप्रासादयो धर्माः शब्दालङ्कारा इति सुविदिता एव । एवमर्थगताश्चारुत्व-हेतवश्चारुत्वापादका धर्मास्तेऽपि अर्थालङ्कारा उपमादयः प्रथिता एव । काव्यगतवर्ण-विशिष्टविन्यासरूपा ये गुणा माधुर्यादयस्तेऽपि सर्वैः सुविज्ञायन्ते तदनतिरिक्तवृत्तयोऽर्थाद् अनुप्रासालङ्कारेभ्योऽपृथग्भूता वृत्तिर्व्यापारो यासां ता उपनागरिका-नागरिकाग्राम्येति तिस्रो वृत्तय उद्भटादिभिः कैश्चित् प्रकाशितास्ता अपि श्रवणगोचरतां गताः । तेभ्यो माधुर्यादिगुणेभ्योऽनतिरिक्तवृत्तयो वैदर्भी-गौडी-पाञ्चालीति प्रख्यातास्तिस्रो रीतयश्चापि वामनादिभिः कैश्चन विद्वद्भिः प्रकाशितास्ता अपि गताः श्रवणगोचरतां तेभ्यो गुणालङ्कारादिभ्यो व्यतिरिक्तो ध्वनिः कः ? न कोऽपीत्यर्थः ।

अन्ये द्वितीया अभाववादिन एवं तर्कयेयुः–नास्त्येव ध्वनिः, ध्वनेः सत्तैव नास्ते । एवकारेण स्वमतं द्रढिम्ना ब्रूते, प्रसिद्धात् प्रस्थानात् प्रतिष्ठन्ते गच्छन्ति अनेनेति प्रस्थानं मार्गस्तस्माद् गुणालङ्कारादिरूपात् प्राचीनमार्गात् पृथग्गामिनः केवलव्यङ्ग्य-व्यञ्जकत्वानुसारिणः काव्यप्रकारस्य त्वत्प्रतिपिपादयिषितध्वनिनामकाव्यभेदस्य काव्यत्वमेव न । यतः सहृदयहृदयाह्लादिनौ शब्दार्थौ तद्रूपत्वमेव काव्यत्वम् । उक्तप्रस्थानभिन्नस्य मार्गस्य अर्थात् पूर्वप्रतिपादितगुणालङ्कारादिपरिष्कृतशब्दार्थमय-त्वप्रकारभिन्नस्य भवदभिमतव्यङ्ग्यव्यञ्जकभावव्यवस्थितस्य ध्वनिनामकाव्यप्रकारस्य काव्यलक्षणं न समन्वेति तत्र सहृदयहृदयाह्लादिशब्दार्थमयत्वाभावात् । अन्यच्च भवत्कलितस्य तस्य ध्वनेर्यः सिद्धान्तस्तदन्तःपातिनः तत्समर्थयितॄन् स्वल्पसंख्याकान्

पुरुषान् सहृदयानिति स्वतोऽभिनवविरुदधारिणौ विधाय तत्प्रसिद्धया तेषां मध्ये सुविदितत्वेनापि ध्वनावस्मिन् काव्यव्यपदेशः प्रवर्तितोऽपि काव्यनाम प्रचारितमपि सकलसूरीणां स्वीकृतिं न प्राप्नोति ।

पुनरपरे तृतीया अभाववादिनस्तस्य ध्वनेरभावमन्यथा प्रकारान्तरेण प्रतिपादयेयुः—ध्वनिर्नाम अपूर्वः सर्वथा नूतनः पूर्वप्रसिद्धगुणालङ्कारादिभ्यो विलक्षणः कश्चित्काव्यप्रकारो न सम्भवत्येव, यतः कमनीयस्य कर्म कामनीयकं काव्ये चारुत्वभावनोत्पादनहेतुत्वम् अनतिक्रामतस्तस्य ध्वनेरुक्तेषु पूर्वाचार्यैः प्रतिपादितेषु तेष्वेव काव्यचारुत्वहेतुषु गुणालङ्कारादिष्वन्तर्भावादथवा तेषां गुणालङ्कारादीनां काव्यचारुत्वहेतूनां मध्येऽन्यतमस्य कस्यचिदेकस्यैव नूतनाभिधानमात्रकरणे सति यत्किञ्चन न तु विशिष्टं कथनं स्यात्, एवं तु पूर्वप्रतिपादितेषु काव्यचारुत्वहेतुषु गुणालङ्कारादिष्वेव कस्यचिदेकतमस्य नवीनं ध्वनिरिति नाम कृतं स्यात्; किन्तु तेन केवलं नूतनं नाम कृतं न तु किञ्चिन्नूतनं वस्तु प्रतिपादितं भवतीति ।

पुनश्च वाङ्मयकाव्यरचनाप्रकाराणां अपरिमेयत्वात् प्रसिद्धैर्भामहादिभिः काव्यलक्षणविधायिभिः कव्यशास्त्रनिर्मातृभिरनुपदिष्टेऽप्रदर्शितेऽविवेचिते वा कस्मिंश्चित् सुतरां नगण्ये प्रकारलेशे कस्यचित् प्रकारस्यांशमात्रे न तु सम्पूर्णप्रकाररूपेऽलीकख्यातध्वनिवादिभिरुद्घाटिते सति अलीकसहृदयत्वभावनामुकुलितलोचनैः स्वात्मनि मिथ्यासहृदयत्वमारोप्य हर्षविलेपादाकुञ्चितनेत्रप्रान्तैर्ध्वनिसमर्थकैः ध्वनिर्ध्वनिरिति ससम्भ्रमं यन्नृत्यते हर्षातिशयोऽभिव्यज्यते, तत्र ईषद्धर्षातिशये कारणविशेषं न पश्यामः। यतोऽन्यैर्महात्मभिरलङ्कारशास्त्रकारैर्भामहोद्भटप्रभृतिभिरसंख्याका अलङ्कारप्रकाराः पूर्वं प्रकाशिताः साम्प्रतमपि महात्मभिरन्यैरपि प्रकाश्यन्ते । न च तेषामलङ्कारप्रकाशकानामाचार्याणामेषा दशा ईदृशी हर्षविलेपान्धता स्वयंदर्पः परैश्चस्तूयमानता श्रूयते । तस्माद् ध्वनिः प्रवादमात्रं केवलं नाम्नि तिष्ठति मिथ्याकल्पितजल्पनामात्रं न तु तत् किञ्चिदीदृग्वस्तु विद्यते यस्य तत्त्वं सूक्ष्मविवेचनसहं स्यात् । तथा च केनचिदभाववादिनाऽन्येन ग्रन्थकृतसमानकालभाविना मनोरथनाम्ना कविना ध्वनिनिषेधविषये श्लोक एको रचितः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति-
व्युत्पन्ने रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत् ।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥

अयमभिप्रायः—यस्मिन् काव्ये कोऽप्यर्थोऽर्थालङ्कारविशिष्टत्वाभावाद् मन आह्लादजनको नास्ते । व्युत्पन्नैर्वचनैः शब्दालङ्कारविशिष्टैः शुद्धैश्च यत्काव्यं न रचितं यत् काव्यं च पुनर्वक्रोक्तिशून्यं शब्दार्थगुणाभिव्यञ्जकसंघटनारहितं काव्यं तद् ध्वनिना

काव्यविशेषेण समन्वितं युक्तम् ( वस्तुतस्तु वराको मनोरथो नाजानद् यत्काव्यमेव ध्वनिर्भवति न तु ध्वनिना समन्वितं भवति; किन्तु ध्वनिनेत्यस्य व्यञ्जकांशेनेति तस्य तात्पर्यं स्यात् तदा तदपि साधु ) इति प्रीत्या गड्डप्रवाहानुसृतप्रेम्णा ध्वनि-समर्थकः सुमतिना सुधिया ध्वनिस्वरूपं किमिति पृष्टः सन् किं प्रतिपादयतीति नो जानीमः ।

असहृदया अन्ये बुधास्तं ध्वनिनामानं काव्यात्मानं काव्यसाररूपं काव्यप्रकारं वा लक्षणावृत्तिरिति कथयन्ति । लक्षणावृत्तिमेव ध्वनिनामकाव्यमिति अज्ञानमहिम्ना एव ध्वनिवादिनः प्रतिपादयन्तीति भाक्तवादिनामाशयः ।

यद्यपि काव्यशास्त्रकारैर्ध्वनिशब्दमुल्लिख्य सोऽयं ध्वनिरित्येवंरूपेण गुणवृत्ति-र्लक्षणावृत्तिर्वा अन्यः कश्चित्प्रकारो गुणालङ्कारादिभेदो वेत्येवंरूपेण न प्रकाशितः । तथापि अमुख्यवृत्त्याऽभिधेतरेण व्यापारेण लक्षणानामव्यापारेण काव्येषु व्यवहारं दर्शयता केनचिदाचार्यविशेषेण ध्वनिमार्गोऽभिधेतरव्यापारप्रधानध्वनिकाव्यपद्धतिरपि ईषत्स्पृष्टा ।

अयमभिप्रायः-यदि केनचित्काव्येषु अमुख्यार्थप्रतिपादयित्री लक्षणावृत्तिः स्वीकृता तत् तेन तथैव अमुख्यार्थप्रधानो ध्वनिमार्गोऽपि लक्षणावृत्तिरूपेण स्वीकृतो यद्यपि स्वयं तेनापि नावधारितमियं लक्षणैव ध्वनिरिति तदित्थं वितर्क्य कारिकायामुक्तम्—"भाक्तमाहुस्तदन्ये" ।

ध्वनेर्लक्षणनिरूपणे अप्रगल्भा मतिर्येषां ते केचन बुधा ध्वनेस्तत्त्वं वाचामविषयम् इदमित्थमिति निर्वक्तुमशक्यमनिर्वचनीयं केवलं सहृदयहृदयेनैव संवेद्यं न त्वन्यहृदयेनेति व्याख्यातवन्तः ।

अतः पूर्वोक्तप्रकारास्वेवंविधासु विरुद्धविचाररूपासु स्थितासु विद्यमानासु विप्रतिपत्तिषु सहृदयमनस्तोषाय ध्वनिस्वरूपं ब्रूमः । तस्य हि ध्वनेः स्वरूपं वस्तुतः समस्तानां सत्कवीनां काव्यस्योपनिषद्भूतं रहस्यभूतमतिरमणीयं किन्तु चिरन्तन-काव्यलक्षणविधायिनां प्राचां काव्यशास्त्रकाराणां सूक्ष्मतमाभिरपि बुद्धिभिरनुन्मीलित-पूर्वं कदापि नोद्घाटितम् । अथ च पुनश्च रामायणमहाभारताद्युदाहरणरूपग्रन्थेषु प्रसिद्धो व्यवहारः प्रयोगो यस्य तद् ध्वनिस्वरूपमिदमित्थमिति यथालक्षणं तद्रूपं पश्यतां सहृदयानां काव्यमर्मज्ञानां ( येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयास्तेषां ) मनसि प्रमोदः शाश्वतीं स्थितिं प्राप्नोतु, ते प्रमोदन्तामिति हेतोः तद्ध्वनेः स्वरूपं निरूप्यते । अथवा आनन्द इति च ग्रन्थकृतो नाम तेन स आनन्दवर्धनाचार्य एतच्छास्त्रद्वारेण सहृदय-हृदयेषु प्रतिष्ठां देवतायतनादिवदनश्वरीं स्थितिं गच्छतु ।

ध्वनिस्वरूपं लक्षयितुं काञ्चन भूमिकां पूर्वं प्रस्तौमि—

गुणालङ्कारोपस्कृतो रसानुकूलश्च यच्छब्दार्थविरचनं तेन यन्मनोरमं तस्यैवंभूतस्य काव्यस्य शरीरे यथात्मा जीवितं तथा साररूपत्वेन स्थितः सहृदयश्लाघ्यो न तु पामरमात्राभ्यर्हितो योऽर्थस्तस्य एको वाच्यरूपोऽपरश्च व्यङ्ग्यरूप इति भेदद्वयमास्ते।

सहृदयश्लाघ्योऽर्थ एव काव्यस्य जीवातुः। तस्य चांशद्वयमस्ति—वाच्यांशो व्यङ्ग्यांशश्च। व्यङ्ग्यस्याभावे काव्ये विद्यमानं केवलं वाच्यमर्थं तु न श्लाघन्ते सहृदयाः। तत् ते काव्यमेव न गणयन्ति। ध्वनौ व्यङ्ग्यस्यैव प्राधान्यमात्मत्वं वा गुणीभूतव्यङ्ग्ये च व्यङ्ग्यविशिष्टवाच्यस्यैव प्राधान्यमात्मत्वं वेति व्यवस्थितिः। अतस्तदुभयमेव काव्यम्। व्यङ्ग्यसम्पर्करहितस्य काव्यत्वमेव न। तच्चित्रमुच्यते। उक्तञ्च—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थितेः।
उभे काव्ये ततोऽन्यद् यत्तच्चित्रमभिधीयते॥

तयोर्द्वयोर्वाच्यप्रतीयमानाख्ययोरर्थयोर्मध्ये यो वाच्यभागः स, उपमाद्यर्थालङ्काररूपेण काव्ये प्रख्यातः, य इमेऽर्थालङ्कारा इति प्रख्याता उपमादयस्ते वाच्यस्य धर्मविशेषा अथवा विच्छित्तिविशेषा एव। स चान्यैर्भामहोद्भटादिभिः काव्यलक्ष्मविधायिभिः काव्यालङ्कारविवेचकैः काव्यशास्त्रकारैर्विविधवाच्यालङ्कारनिरूपणप्रकारेण व्युत्पादितः। महतां कवीनां वाल्मीकिव्यासकालिदासप्रभृतीनां काव्यरूपासु वाणीषु प्रतीयमानं पुनर्वाच्यात् पृथगन्यदेव वस्तु अर्थरूपमास्ते। प्रशस्ताङ्गवतीषु नारीषु ज्ञातेभ्योऽलङ्कृतेभ्यो वा आनननासिकादिभ्योऽवयवेभ्योऽतिरिक्तं पृथगनुभूयमानं लावण्यं मुक्ताफलेष्वन्तस्तारल्यरूपं तत्त्वमिव शोभते। सुन्दरीषु ललनासु लावण्यं नामावयवसंस्थानादिव्यङ्ग्यं किन्तु अवयवातिरिक्तं किमप्यन्यदेव सहृदयानां लोचनयोरमृतमिवाह्लादकं तत्त्वान्तरं तत्त्वं प्रकाशते यथा तथैव काव्ये स प्रतीयमानोऽर्थो द्योतते। उक्तञ्च—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥

स प्रतीयमानार्थो हि अनेकैः प्रभेदैः विविधाकारैस्त्रिभिः प्रकारैः प्रविभक्तः। ते च प्रभेदा वस्तुमात्रम् अनलङ्कृतार्थरूप इत्येकप्रकारः। अलङ्कारा वाच्यदशायां च उपमादिनामभिः प्रख्याता येऽर्थास्त एव व्यङ्ग्यरूपाः सन्तोऽपि पूर्वप्रत्यभिज्ञानबलात् पूर्वालङ्कारनामभिरेवोल्लिख्यन्ते ब्राह्मणश्रमणन्यायेनेति द्वितीयः प्रकारः। रसभावरसाभासादयोऽपि संगृहीता इति तृतीयः प्रकारः; किन्तु एते त्रयोऽपि व्यङ्ग्यप्रकारा वाच्यसामर्थ्येनैव वक्तृबोद्धव्यादिरूपवैशिष्ट्येन वाच्यबोधानन्तरवाच्यबलेनैव द्योत्यन्ते,

तथा च त्रिप्रकारोऽपि व्यङ्ग्यो वाच्याद् विभिन्न एव। यो हि तत्र वाच्योऽर्थः, स एव व्यङ्ग्यो न भवति। अत्र प्रतीयमानार्थो लोचनकारेण निजीयाज्ञानमहिम्ना ध्वनिरूपेण गृहीतः। यथोक्तं तेन—"यस्तु स्वप्नेऽपि न वाच्यो न लौकिकव्यवहारपतितः....रसः, स काव्यव्यापारैकगोचरो रसध्वनिः, स च ध्वनिरेव स एव मुख्यतयात्मेति" तदनुकूलं हि आद्यस्तावत्प्रभेदः प्रथमो वस्तुरूप एव व्यङ्ग्यार्थाप्रकारो वाच्यार्थाद् दूरमत्यन्तं सर्वथा वा विप्रभेदवान् विपरीताकार इत्यर्थः। यतः कदाचित्क्वचिद् वाच्येऽर्थे विधिरूपे निषेधाभावात्मकप्रवर्तनरूपे सति स व्यङ्ग्योऽर्थः प्रतिषेधरूपो दृश्यत इति शेषः। (विधिनिषेधौ विरुद्धाविति न कस्यचिदपि विमतिरिति लोचनकारः) यथा—गोदावरी-तीरस्थलताकुञ्जं स्वाभिसारस्थलीभूतं प्रति पुष्पावचयनार्थं यान्तं कञ्चिद् धार्मिकं विघ्नं चिन्वाना काचिद् विदग्धा सुन्दरी मुग्धेव तं गमनान्निषेद्धुं व्यञ्जनया ब्रूते—"भो धार्मिक! निश्शङ्कः सन् इतोऽग्रे याहि, यतोऽद्य यः प्रतिदिनं त्वामभीषयत्, स श्वा तेन प्रख्यातेन सर्वैः ज्ञातवासेन गोदावरीतीरलतागहनकृतनिवासेन अधुनापि तत्रैव स्थितेन अकुतोभयेन सिंहेन मारितः ( तत्र गतस्तस्यैव मुखे पतिष्यसीति इत एव परावर्त्तस्व, मा अग्रे गन्तुं मुधा साहसं कृथा इति व्यङ्ग्यः )। उक्तञ्च—

भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन॥

स च प्रतीयमानोऽर्थस्त्रिषु भेदेषु प्रविभक्तः। प्रथमः केवलं वस्तुरूपोऽनलङ्कृ-तार्थरूपः। द्वितीयोऽलङ्काररूपः। अर्थाद् वाच्यरूपत्वेन उपमादिनाम्ना ख्यातः, स एवार्थो व्यङ्ग्यत्वमापन्नः पूर्वप्रत्यभिज्ञानबलेन वाच्यदशां गतोऽलङ्कारनाम्ना उल्लिख्यते। यथा कश्चन ब्राह्मणो यदा बौद्धभिक्षुर्भवति तदा पूर्वप्रत्यभिज्ञानबलेन ब्राह्मणश्रमणो व्यपदिश्यते। तृतीयश्च रसभावरसाभासादिरूपः।

त्रिप्रकारकोऽपि व्यङ्ग्यो वाच्यात्पृथगेव गण्यते। अर्थाद् यो वाच्योऽस्ति स एव व्यङ्ग्यो न भवति। यथा प्रथमो वस्तुरूपो व्यङ्ग्यप्रकारो वाच्यात्सर्वथा भिन्न एवास्ते। क्वचन वाच्यार्थस्य विधिरूपत्वेऽपि व्यङ्ग्योऽर्थः प्रतिषेधात्मक एव यथोक्तोदाहरणे। क्वचिद् वाच्ये प्रतिषेधरूपे व्यङ्ग्यो विधिरूपः, यथा—

"श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोर्निमाङ्क्षीः" ॥

काचिच्चलितचारित्रमुद्रा प्रोषितपतिका तरुणी सन्ध्यायां स्वगृहे निवासार्थं स्थितं कञ्चन युवानं तदीयमदनभावं विलोक्य स्वयमपि तं प्रति उत्पन्नमन्मथव्यथा-वेशा व्यञ्जनयाऽभ्यनुजानाति-हे रात्र्यन्धकपथिक, अत्रास्यां शय्यायां मम श्वश्रूर्नि-मज्जति जराजीर्णत्वाच्छय्यायां पतित्वा निश्चेतनेव शेते, अत्र शय्यायां चाहं स्वयं शये।

एतत्त्वं दिवसकं यावद् दिवसस्तिष्ठति तावत्कालपर्यन्तं सम्यग् भूयोभूयः परिचिनुहि आवयोः शय्यायां मा पतः। अथवा कुत्सितं दिवसं दिवसकं प्रतिपालय यथा कथञ्चिद् अतिवाहय।

अत्र प्रतिषेधे वाच्येऽपि पथिकं प्रति आरोपितेन रात्र्यन्धक इति विशेषणेन वक्तृबोद्धव्यवैशिष्ट्याद् विधिः प्राधान्येनाभिव्यज्यते। यथाह महिमभट्टः—"अत्र निशान्धताध्यारोपेण स्वशयनस्पर्शप्रतिषेधमुखेन श्वश्रूशय्यासन्निवेशदेशं दर्शयन्ती रात्रावत्र मदीय एव शयनीये त्वया निभृतमुपस्थातव्यमिति तैस्तैराकारैः प्रतिषेधमुखेन स्वाभिप्रेतमर्थमस्मै निवेदयते"। क्वचिद् वाच्ये विधिरूपेऽनुभयरूपो यथा—

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत॥

कयाचन खण्डितयाऽन्तर्ज्वलितेर्ष्याप्रकोपया सावहित्थं सोल्लुण्ठनं सप्रणयौचित्यम् अन्यासक्तहृदयो दक्षिणनायकं भर्त्स्यते—भोः कितव स्वप्रेयसीपार्श्वं याहि। एकस्या ममैव निश्श्वासरोदितव्यानि त्वद्विरहविहितानि भवन्तु। मा तवापि मां प्रति दाक्षिण्यमात्रविवशस्य वस्तुतस्तस्यामेव निर्व्याजमनुरक्तहृदयस्य तया प्रेप्सितप्रेयस्या विना तानि तद्विरहविहितानि निश्श्वासरोदितव्यानि भूवन्निति। अत्र सर्वथा शठस्त्वं मयि केवलं कृतकप्रणयं प्रदर्शयसि वस्तुतस्तस्यामेव गाढमनुरक्त इति भर्त्सनमभिव्यज्यते, तच्च विधिरूपे वाच्ये न निषेधरूपं न वा अन्यविधिरूपम्। क्वचिद् वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे। अभिसारिकाणां विघ्नं करोष्यासामपि हताशे।

हे मुखचन्द्रचन्द्रिकापसारितान्धकारपटले त्वां प्रार्थये प्रसीद परावर्तस्व व्यवसितं गमनमग्रे माकार्षीः। हे हताशे, एतद् नर्मवचनम् आत्मप्रत्यभिज्ञापनार्थम्। अन्यासामपि अभिसारिकाणां रमणार्थं सङ्केतं गच्छन्तीनां विघ्नं करोषि स्वाननचन्द्रप्रकाशकरणात्। अपिग्रहणात् तव तु विघ्नरूपः स्वमुखप्रकाश एव वर्तते, अत एव हताशा व्यर्थमनोरथा त्वमिति प्रियकृतं चाटु एवात्र व्यज्यते।

क्वचन वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितो यथा—

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥

काचनाविनीता कुतश्चित् खण्डिताधरा निश्चिततत्सविधसन्निधाने तद्भर्त्तरि तमनवलोकमानयेव कयाचिद् विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते—स्वप्रियतमायाः सव्रणम् अनात्मकृतक्षतभाजम् अधरं दृष्ट्वा कस्य पुरुषस्य रोषो न जायते

सभ्रमरं यत्पद्मं तदाघ्रातुं शीलं यस्यास्तत्सम्बुद्धौ तथा वारिते वारणायां प्रतिकूलाचरणस्वभावा तत्सम्बुद्धौ इदानीं वामाचरणस्य फलं भुङ्क्ष्व।

अत्र वाच्यार्थस्य बोद्धव्या स्वयं नायिका व्यङ्ग्योऽर्थस्तु तांस्तान् बोद्धव्यान् प्रति विविधानि रूपाणि धत्ते, तानि यथा--अपराधो नास्तीति व्यङ्ग्यस्य तद्भर्त्ता विषयः। भ्रमरकृतं क्षतमेतदिति नेयं चलितचरित्रेति प्रातिवेशिकलोको विषयः। पत्युः प्रियतमेयमिति प्रियाया इति शब्दबलादिति सपत्नीजनो विषयः। पत्युरुपालम्भोऽपि प्रियतमां प्रत्येव भवति न तु सामान्याम् अप्रियां प्रतीति स्वयं नायिका विषयः। अद्यैषा तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता; किन्तु पुनरेवं प्रकटरदनदंशनविधिर्न विधेय इति चौर्यकामुकविषयः। अन्ये चेवंप्रकारा वाच्याद् विभेदिनः प्रतीयमानभेदाः सम्भवन्ति, तेषां निबन्धेऽवसराभावाद् नोल्लेखः।

बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।
आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः॥

इत्युक्तदिशा ते व्यङ्ग्या ऊह्याः।

अलङ्काररूपः प्रतीयमानार्थस्य द्वितीयः प्रकारोऽपि वस्तुमात्रप्रकारवद् वाच्यात्पृथग्रूपो बहुप्रपञ्चस्तन्नेह वितन्यते।

तृतीयस्तु रसादिरूपः। आदिपदेन भाव-रसाभास-भावाभास-भावोदय-भावसन्धि-भावशबलतारूपा व्यङ्ग्यार्थप्रकाराः सन्ति। तेऽपि नात्र प्रोच्यन्ते।

महतां प्रतिभाधनानां कवीनां काव्यभूता सरस्वती स्वादु आस्वादयोग्यं प्रतीयमानार्थवस्तु काव्यतत्त्वं ( ध्वनिकारः प्रायः सर्वत्र व्यङ्ग्यमर्थं महतादरेण वस्तुपदेन संदिशति) सहृदयान् प्रति प्रकटयन्ती सती तेषां कवीनाम् अलोकसामान्यं लोकदुर्लभं दिव्यं परिस्फुरन्तमतिभासमानं प्रतिभाविशेषं महोत्तमकाव्यप्रणयनपटिष्ठनवनवोन्मेषशालिप्रज्ञातिरेकम् अभिव्यनक्ति सूचयति।

तद्वस्तुतत्त्वं त्रिविधप्रतीयमानार्थरूपं वस्तु अभिव्यज्यमाना महाकवीनां भारती प्रतिभाविशेषं प्रतिभानामापूर्ववस्तुनिर्माणक्षमा प्रज्ञा तस्या विशेषो रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वम्, येन परिस्फुरत्प्रतिभाविशेषेण हेतुना अतिविचित्रकविपरम्परावाहिनि अत्यद्भुतकविपरिपाटीमये संसारे काव्यजगति कालिदासप्रभृतयो द्वौ वा त्रयो वा द्वित्रा इति पञ्च वा षड् वा पञ्चषा गण्यन्ते महाकविव्यपदेशभाजो भवन्ति। उक्तं च—"व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनां न तु वाच्यवाचकरचनामात्रेण"।

सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते। यदि च वाच्यरूप एवासावर्थः स्यात्तद्वाच्यवाचकरूपपरिज्ञानादेव तत्प्रतीतिः सुलभा। किं च वाच्यवाचकलक्षण-मात्रकृतप्रयासानां काव्यतत्त्वार्थभावनाविरहितानां स्वरश्रुत्यादिलक्षणमिवाप्रगीतानां गान्धर्वलक्षणविदामगोचर एवासावर्थः। उक्तञ्च—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥

अयमभिप्रायः-व्याकरणकोषमीमांसाज्ञानमात्रेण स काव्यसारभूतः प्रतीयमानरूपोऽर्थो नावगम्यते; किन्तु केवलं काव्यमर्मज्ञैरेव वेद्यते, तस्माद् वाच्यात्पृथगेवासाविति। यदि पुनर्वाच्यरूप एवासौ प्रतीयमानार्थो भवेत्तदा तद्वाच्यवाचकस्वरूपपरिज्ञानादेव तस्य प्रतीतिः स्यात्; किन्तु केवलं वाच्यवाचकशास्त्रे कृतायासानां काव्यतत्त्वार्थभावना-विमुखानां काव्यमर्मग्रहणसमर्थसंस्काररहितानाम् असहृदयानाम्, असौ प्रतीयमानोऽर्थ-स्तथैवागोचरो बुद्धेरविषय एव भवति, यथा गान्धर्वलक्षणं सङ्गीतशास्त्रं विन्दन्ति केवलं सिद्धान्ततो जानन्ति ये तेषाम् अप्रगीतानां नास्ति प्रकृष्टं गीतं गानकर्म येषां तेषां प्रयोगतः सङ्गीतमनभ्यस्यतां जनानां स्वरश्रुत्यादीनाम् आदिशब्देन जात्यंशकग्रामराग-भाषाविभाषान्तरभाषादेशीमार्गा गृह्यन्त इति तेषां लक्षणं स्वरूपं बुद्धेरविषय एवास्ते।

एवं रीत्या वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सद्भावं समर्थ्य समेषु सत्स्वप्यर्थेषु तस्यैव प्राधान्यं काव्यमर्मज्ञा विदन्ति। उक्तञ्च ध्वनिमार्गं प्रदर्शयता आनन्दवर्धना-चार्येण ध्वन्यालोके—

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दस्य कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥

स व्यङ्ग्योऽर्थस्तस्य प्रकाशनसामर्थ्यव्यापारो व्यञ्जनाव्यापारस्तेन सम्बन्धोऽ-स्त्यस्येति कश्चन व्यञ्जकः शब्दश्चेति तौ शब्दार्थौ महाकवेः ज्ञातव्यौ यदा तदा महा-कवित्वलाभो नान्यथा। ज्ञातावपि तौ विशेषरूपेण परिचेतव्यौ। तस्मान्महाकवित्वमा-शासानस्य व्यङ्ग्यव्यञ्जकानुसन्धानमत्यन्तमावश्यकम्।

व्यङ्ग्यव्यञ्जकयोः सति प्राधान्येऽपि वाच्यवाचकानां प्रथममुपादानमावश्यकम्। प्रकाशाभिलाषो जनो यथा तदुपायतया साधनत्वेन दीपशिखायोजने सोद्यमो भवति विना दीपशिखामालोकस्यासम्भवात्। तद्वत्तस्मिन् व्यङ्ग्यार्थविषये सादरो व्यङ्ग्यमर्थं प्रतिबुबोधयिषुः कविर्वाच्येऽर्थे वाच्यार्थयोजनाविषये यत्नवान् अनुभूयते। विवचनेनानेन व्यङ्ग्यार्थं प्रति प्रतिपादकस्य काव्यकर्तुः कवेर्व्यापारसंरम्भः सूच्यते। कविः परमार्थतो व्यङ्ग्यार्थबुबोधयिषैव सर्वं वाक्यार्थजातं स्वकाव्ये योजयन् भ्राजते। अनया रीत्या यथा पदार्थद्वारेण पदार्थप्रतीत्यनन्तरं वाक्यार्थप्रतीतिस्तद्वत्तस्य वस्तुनो

व्यङ्ग्यस्यार्थस्य बोधो वाच्यार्थबोधपूर्वको वाच्यार्थप्रतीत्यनन्तरमेव जायते। यथा वाक्यार्थबोधे पदार्थबोधः कारणम्, तथैव व्यङ्ग्यार्थबोधे वाच्यार्थबोधः कारणं भवति। उक्तञ्च ध्वन्यालोके—

यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः॥

वाच्यार्थप्रतीतिपूर्वकत्वेऽपि व्यङ्ग्यस्यार्थस्य प्राधान्यं सुस्थमेवावतिष्ठते, न विलुप्यते। उक्तञ्चानन्देन—

स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन्।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते॥

यथा पदस्यार्थः स्वसामर्थ्यम् आकाङ्क्षा-योग्यता-सन्निधयस्तद्वशेनैव तदधीन-तयैव वाक्यार्थं प्रतिपादयन् बोधयन् वाक्यार्थबोधनकार्यस्य निष्पत्तौ पूर्णतायां सिद्धौ सत्यां न विभाव्यते; अपि तु वाक्यार्थ एव लीयते। पृथक्त्वेन न प्रतीयते तथैव व्यङ्ग्यार्थं प्रतिपादयन् वाच्यार्थो व्यङ्ग्यार्थे विलीयते, न पृथक्त्वेन भासते। तथैव पदार्थवाक्यार्थ-न्यायेन प्रतीयमानार्थोऽपि चमत्काराभावकारणाद् वाच्यार्थविमुखात्मनां सचेतसां सहृदयानां काव्यमर्मग्राहिण्यां बुद्धौ वाच्यार्थानन्तरमेव बोधविषयतां याति। उक्तञ्च—

तदवत्सचेसतां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते॥

ध्वनिविषयकनिखिलविप्रतिपत्तीनां निरासाय सहृदयमनःप्रीतये तस्य ध्वने-रसंदिग्धस्वरूपपरिचयाय वक्त्यानन्दवर्धनाचार्यो यद् ध्वनिरेको विशेषप्रकारकं काव्यमस्ति। यत्र वाच्योऽर्थः स्वात्मानमुपसर्जनीकृत्य अप्रधानीविधाय वाचक-शब्दश्च निजीयवाच्यार्थमुपसर्जनीकृत्य व्यङ्ग्यमर्थं प्रकाशयतस्तादृशोऽर्थस्तादृशश्शब्दश्च ध्वनिशब्देन व्यपदेश्य आस्ते—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

वस्तुतो ध्वनेरेतल्लक्षणद्वारा आनन्दवर्धनेन एकविशेषप्रकारकं काव्यं ध्वनिपद-बोध्यमिति सहृदयजगतो बोधितवान्। समस्ते ध्वन्यालोके निजीये ग्रन्थे ध्वन्यालोक-कारो ध्वनिशब्दस्य केवलेऽत्रैवार्थे काव्यप्रकारविशेषे प्रयोगं कृतवान्। तद्यथा—

१. व्यङ्ग्यप्राधान्ये हि ध्वनिः। २. ननु ध्वनिः काव्यविशेष इत्युक्तम्। ३. ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्। ४. व्यङ्ग्योऽर्थो ललनालावण्य-प्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम्। ५. व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनि-संज्ञितकाव्यप्रकारः, गुणभावे तु गुणीभूतव्यङ्ग्यता। ६. तदयमत्र संग्रहः—

यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते ।
संवृत्त्याभिहितो वस्तु यत्नालङ्कार एव वा ॥
काव्यध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः ।
सर्वत्र तत्र विषयो ज्ञेयः सहृदयैर्जनैः ॥
७. ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।
न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः ॥

अत उक्तदिशा ध्वनिशब्दस्यैक एवार्थोऽभिप्रेतो नान्येऽर्थाः सम्भवन्तोऽपि ग्रन्थकर्त्तु-र्ध्वन्यालोककारस्यानन्दवर्धनस्याभिमता । केवलं व्यञ्जके शब्दार्थयुगल एव काव्यविशेषे ध्वनिपदस्य साधुता तेन सर्वत्र ग्रन्थे ध्वन्यालोके प्रतिपादिता नान्यत्र ।

ध्वनिसम्प्रदायस्य सम्मान्यानुयायी वरिष्ठव्याख्याता मम्मटाचार्योऽपि निजीये समस्ते काव्यप्रकाशे ध्वनिशब्दस्य प्रयोगं केवलमस्मिन् काव्यप्रकारविशेषेऽर्थे कृतवान् । यथा—इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः, सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदा व्यङ्ग्यस्य त्रिरूपत्वात्, इत्यादि ।

आनन्दवर्धनेन व्यङ्ग्यप्रधानकाव्यं ध्वनिर्नाम इत्युक्तौ प्रामाणिक आधारोऽपि निर्दिष्टः । वैयाकरणैः श्रोत्रग्राह्यस्फोटव्यञ्जका वर्णा एव ध्वनिशब्देन निर्दिष्टाः । तदनु-यायिभिः काव्यतत्त्वार्थदर्शिभिरन्यमनीषिभिरपि शब्दार्थयुगलमिश्रितशब्दस्वभाव-वत्काव्यं व्यञ्जकत्वसादृश्याद् ध्वनिशब्देन निर्दिष्टम् । यथा ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति । तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभि-र्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः ( ध्वन्यालोके ) । काव्यप्रकाशेऽपि—

"बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य" ।

निष्कर्षोऽयमानन्दवर्धनोक्तानां वचसां तेषां यद् व्युत्पत्तिनिमित्तकोऽर्थो ध्वनतीति ध्वनिः, अर्थाद् व्यञ्जकः । प्रवृत्तिनिमित्तकोऽर्थश्च व्यङ्ग्यार्थस्य प्रधानतयाऽभिव्य-ञ्जकः काव्यविशेषः । अत एवानन्दवर्धनः पुनरुपदिशति—

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः ।
ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम् ॥

ग्रन्थान्तेऽपि ध्वनिनामकप्रकारस्य काव्यस्य निर्देशं कुर्वाणेनानन्दवर्धनेन नन्दनारण्यस्य कल्पवृक्ष इव ध्वनिं बोधयित्वा तस्य तत्संज्ञकस्य काव्यप्रकारत्वस्य सुस्पष्टमुल्लेखः कृतः—

काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः।
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम्॥

नातो ध्वनेर्भान्ति विभिन्नवाच्या
भ्रान्तिर्न कार्या ध्वनिरूपतायाम्।
आनन्दमार्गो विशदो ध्वनेः स
संगृह्यतां तर्कधराधुरीणैः॥

निजीयभावं विनिवेद्य शैला
विद्वज्जनान् प्रार्थयते नितान्तम्।
त्रुटीः क्षमन्तां गुणपक्षपाता
बुधाः सुधासागरतामुपेताः॥ इति।



लघु-ग्रन्थमाला

[ ४८ ]

# अस्ताचलीयम्

प्रणेता

आचार्यश्रीगोविन्दचन्द्रपाण्डेयः

आचार्यचरः,

प्राचीनभारतीयेतिहास-संस्कृतिविभागस्य

गोरखपुर-राजस्थान-प्रयागविश्वविद्यालयानाम्

कुलपतिचरश्च,

राजस्थान-प्रयागविश्वविद्यालययोः



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०४८

# प्ररोचना

वेदेषु **'अस्तम्'** इति पदं गृहस्य वाचकम्। भगवतः सूर्यस्य **'अस्तम्'** गमनं गृहं प्रति प्रत्यावर्तनमेव, स्वरूपे समवस्थितिर्वा। मित्रवर्याणां **श्रीमतां गोविन्दचन्द्र-पाण्डेयमहोदयानाम्** **'अस्ताचलीयम्'** इति मुक्तककलापे नाम्नि स्वविरचितानि पद्यानि पाश्चात्यमहाकवीनां मुक्तककृतीनां काव्यान्तराणि च ग्रथितानि। तानि स्वरूपावस्थाप्रत्यायकान्येव। बन्धुवर्याः पाण्डेयमहोदया बहोःकालात् संस्कृतभाषया छात्रावस्थात एव कुतूहलवशात् काव्यरचनायां प्रवृत्ताः। क्रमेण कुतूहलमिदं व्यसनायितम्। अत एव तेषां कृतिः सहजा, मनोरमा च दरीदृश्यते। एकतः प्रस्तुतसङ्ग्रहो-पात्तेषु मुक्तकेषु संस्कृतगिरां लयसम्पन्नता, बन्धसौष्ठवञ्च प्राचां कौशलमनुहरति, अपरतश्च वर्ण्यविषयाणां चयने, बिम्बोद्भावने, चित्तदशानां च प्रकाशने नव्यानां सरणिं ह्लेपयति। एवमयं मुक्तककलापो नवं नवं जायमाना पुराणी पुरन्धिरुषेव मन आह्लादयति, चेतो विकचयति, धियं धवलयति, आत्मनः प्रसादमधिगमयति च।

काव्यान्तरेषु मूलरचनाया एव स्वारस्यमनुभूयते। मूलरचनानां परिवेशस्य यथोचितं स्थानान्तरणमपि एवं विरचितं यत् सन्धिरेव दृश्यते, न संहिताः पदार्थाः। पद्येषु छन्दोवैविध्यम्, विच्छित्तिवैविध्यञ्च दृश्यते। क्वचिदस्य काव्यस्य वैभवः महाकविं भवभूतिं प्रत्यभिज्ञापयति, क्वचिन्माघकवेः पदविन्यासं स्मारयति, क्वचिच्च अमरुकनिबन्धरीतिं परिस्फुरयति।

मन्ये, एष मुक्तककलापः सहृदयानां मनस आसेचनकं भविष्यतीति शम्।

**वाराणस्याम्**
मार्गशीर्षशुक्लैकादश्याम्,
२०४८ वैक्रमाब्दे
(१७। १२। १९९१ खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

आङ्ग्लकाव्यस्य पाश्चात्त्यसाहित्ये परमोत्कर्ष इति नास्त्येव विवादविषयः। तत्काव्यपारावारस्य कोऽपि लावण्यावभासो गीर्वाणगिरा कथमपि व्यञ्जनीय इति स्थितो मे चिरन्तनो मनोऽभिलाषः। दुस्सम्पादत्वं च तस्य न ममाविदितम्। प्रथमतस्तु सुकाव्यं शब्दपरिवृत्तिमेव न सहते। पुनश्च दुरवगाहमन्तरं देशकालप्रकृतीनां संस्कृताङ्ग्लभाषयोस्तन्निबन्धनं च अन्तरं तदीयवाङ्मये वचोभङ्गीनां चिन्तनभावनादिमार्गाणां सहृदयत्वसंस्काराणां काव्यशास्त्रविचारसरणीनां छन्दोरचनानां च। तथाप्यनेकैराङ्ग्लदेशीयैर्भारतीयैश्च पण्डितैः संस्कृतवाङ्मयस्य शास्त्रीयग्रन्थानामाङ्ग्लगिरा अनुवादो व्यधायि काव्यानां च अभिधेयार्थव्याख्यानपरः। कैश्चित् पण्डितैः पाश्चात्त्यभाषानिबद्धान्यपि कतिपयानि काव्यानि गीर्वाणगिरानूदितानि। विरल एव त्वेतादृशः प्रयासः। साफल्यमप्यत्र दुरवापम्। यावता काव्यसौष्ठवं शब्दमात्रनिष्ठं तदनुवादोऽशक्य एव, यावता त्वर्थनिष्ठं तावता तदनुवादसहम्। अर्थोऽपि देशकालनियतलोकप्रसिद्धश्चेद् देशकालान्तरे दुर्बोध एव स्यात्। यस्तु व्यङ्ग्यो भावार्थस्तस्यैव मानवहृदयनिश्रितं सनातनं सार्वभौमत्वम्। तद्व्यञ्जकत्वेन कल्पिता विभावबिम्बा एव उपमानाद्यलंकृता मुख्यत्वेन अनुवादविषयतां भजन्ति। अनुवादे तादृशबिम्बानां भाषान्तरसंस्कारौचित्येन समर्थतया च योजनं मूलभावसाक्षात्कारपुरस्सरं शब्दार्थोपस्थापननिपुणां प्रतिभामपेक्षते। एवं च महाकवीनां देशकालाम्लानयशोमुकुटानां काव्यनिगूढभावानुवादोऽसाध्यप्राय एव मादृशस्याल्पधियो जनस्य। तथापि तत्काव्यमहिम्ना गीर्वाणगिरश्च गौरवेण समाकृष्टो वाग्देवतार्चनकुसुमायमानानीमानि पद्यानि रचयितुं प्रवृत्तः स्वाधिकारमनवेक्ष्य किरातमिव विडम्बयन् क्षन्तव्योऽस्मि सद्भिः। अस्ताचलीयाशाभवानां बहूनां कवीनामत्रच्छाया इत्यस्ताचलीयकविच्छायमिति संज्ञितोऽयं संग्रहः।

सुहृद्वर्याः श्रीमद्**विद्यानिवासमिश्र**महाभागाः स्वविद्यया स्वप्रतिभया कृतिभिश्च विश्वविश्रुताः। एतद्ग्रन्थ-प्रकाशने तेषामेवोपकारो मुख्य इति भृशमनुगृहीतोऽस्मि। कृतज्ञताज्ञापनं च तदर्थं न कदापि पर्याप्ततामुपेयादिति विशेषमनुक्त्वैव विरमामि। **श्रीसुरेशचन्द्रपाण्डेय**महाभागाः, सुहृद्वर्याः आचार्यप्रवराः **श्रीदयाकृष्ण**महाभागाः, **आचार्यश्रीमुकुन्दलाठ**महोदयाश्च सस्नेहं सबहुमानं चात्र स्मर्तव्या ममोत्साहवर्धकाः। अस्ताचलीयेऽस्मिन् मन्दायमानास्वपि मूलकाव्यरश्मिषु कदाचिदुदियादेव कश्चित्परितोषश्छायाभिः सुधियामित्याशासे।

स्व-मूल-वृन्त-च्युत-पुष्प-विक्रिया
दुनोति नो रूप-विलोप-दर्शनात्।
तथापि सौरम्यलवस्य वासना
प्रसादयत्येव न किं सचेतसः॥

इति विचिन्तयन् निवेदयति विदुषां वशंवदः—

**गोविन्दचन्द्रपाण्डेयः**

# विषयसूची



पृष्ठानि ५९

कवयः १२

काव्यानि ५७



# अस्ताचलीयम्

## रूपोद्यानम्[1]

(सौ० १)

रूपोत्कर्षवतः समान्वयमयी वृद्धिर्निसर्गप्रिया
कालेनास्तमयन्हि मूलमहिमा बिम्बान्तरं पुष्यतु।
कान्तिश्चेन्निजदर्शनेन सुखिता म्लायेदनन्यैव ते
रूपोद्यानमिदं विकस्वरमहो शीर्येत बीजं विना[2] ॥

× × ×

## रूपोद्यानम्[3]

(सौ० १)

रूपोज्ज्वलश्रियां नित्या सन्ततिः कस्य न प्रिया।
सौन्दर्य-पाटलोद्यानं सावसानं क इच्छति ॥ १ ॥

यावत्परिणतावस्थो जीर्णः कालेन शीर्यते।
तावदंशहरस्तस्य स्मृतिं रक्षेन्नवाङ्कुरः ॥ २ ॥

ध्यानं संकुचितं यत् ते स्वस्यैवोज्ज्वलयोर्दृशोः।
रूप-दीप्ति-शिखां नूनं पुष्यसि स्वयमिन्धनाम् ॥ ३ ॥

एवं स्फीतेऽपि दुर्भिक्षं किमापादयसे स्फुटम्।
आत्मनैवात्मनः शत्रुः सौम्ये क्रूरस्तथात्मनि ॥ ४ ॥

लोकालङ्कारभूतस्त्वमिदानीं नूतनोज्ज्वलः।
वर्णाढ्यस्य वसन्तस्य दूतो नु प्रथमागतः ॥ ५ ॥

---

१. प्रसिद्धतमस्य आङ्ग्लमहाकवेः शेक्सपीयरस्य। एजिलावेथीयनवजागरणकाले जातस्यास्य स्वाभाविकी रीतिः सर्वरससिद्धा। तस्य सौनेटाख्य-काव्यमालातः प्रस्तुता अनुवादाः।

२. अनुरूपापत्येन स्ववंशवर्धनार्थं कश्चित् प्रार्थ्यते।

३. तदेव काव्यं पङ्क्तिशोऽनूदितम्।

तथापि सम्पदं स्वीयां मुकुलीकुरुषे स्फुटाम् ।
कृपणोऽत्र स्वभावस्ते विपरीतफलप्रदः ॥ ६ ॥

रूपव्ययेऽनिवार्येऽपि सन्ततिः प्रिय रक्ष्यताम् ।
ऋणान्यशोधयित्वा हि भोगो घस्मरता ध्रुवम् ॥ ७ ॥

× × ×

## अवस्थान्तरम्

(शे० सौ० ६)

प्राच्यां भानुरुदेति रम्य-सुभगो ज्योतिःकिरीटो यदा
सम्राडेव यथा नवः शुचि-रुचिर्लोकाभिवन्द्योऽञ्जसा ।
तारुण्योपगतं प्रताप-शिखरारूढं सुवर्ण-प्रभं
लोको नन्दति, हन्त पश्चिम-तटे मन्दे तु मन्दादरः ॥ १ ॥

एवं प्रिय निजावस्थां विकार्यां पश्य कालतः ।
सन्तत्या स्वीयया तावद् रूप-राज्यं स्थिरीकुरु ॥ २ ॥

× × ×

## प्रियं प्रति

(सौ० १८)

औपम्यमावहतु किं मधु-वासर-श्रीः
रूपं ततोऽधिकतरं तव चारु शान्तम् ।
वैशाखमासि मुकुलानि धुनोति झञ्झा
स्वल्पावधिश्च मधुरप्यपयाति तूर्णम् ॥ १ ॥

चक्षुर्दिवस्तपति चण्डमदः कदाचिद्
आच्छाद्यतेऽपि बहुधा कनक-प्रभासः ।
रम्यं व्यपैति निखिलं रमणीय-भावाद्
आपद्यते च विकृतिं नियत-स्वभावात् ॥ २ ॥

वासन्तिकी तु तव भास्यति नित्यदा श्रीः
रूपं न काल-कवलो भविता कदापि ।
काव्ये निबद्धममृते प्रसरेद् यशस्ते
यावत्पठन्ति मनुजा इह जीव-लोके ॥ ३ ॥

× × ×

## उपसान्त्वनम्

(सौ० २९)

यदा दैवपराभूतो लोकेनाप्यवधीरितः ।
परित्यागं स्वमालोच्य दूये चैकाकिनात्मना ॥ १ ॥

आक्रोशामि दिवं व्यर्थैर्विलापैर्वधिरोपमम् ।
स्ववृत्तमनुपश्यंश्च शोचे दुर्भाग्यमात्मनः ॥ २ ॥

भाग्याधिकेन चात्मानं मनसा तुलयामि यत् ।
मित्रसम्पत्तये तस्य तथैव स्पृहयामि च ॥ ३ ॥

शिल्पं कस्यचिदिच्छामि प्राशस्त्यमपरस्य च ।
स्वात्मभोगेन नितरामसन्तोषमुपैमि च ॥ ४ ॥

न्यक्करोमि यदात्मानमेवं चिन्तापरायणः ।
स्मृत्या ते सहसा यामि निर्वृतिं प्रिय तत्क्षणात् ॥ ५ ॥

निद्राजडभुवो यद्वद् उत्पतन् खग औषसः ।
दिवो द्वारे स्तुतिं गायेत्तथावस्थो भवाम्यहम् ॥ ६ ॥

स्मृतिस्ते मधुरा प्रीत्या व्याप्नोति हृदयं यदा ।
अविनिमेयमात्मीयं पदं मन्ये नृपादपि ॥ ७ ॥

× × ×

## स्मरणम्

(सौ० ३०)

यदा स्निग्ध-निश्शब्द-धी-सम्प्रचारे
व्यतीतार्थ-साक्ष्ये स्मृतीराह्वयामि ।
तदा तत्तदिष्टानवाप्तेरभावान्
विचिन्त्याथ दूये वृथा नष्टकालम् ॥ १ ॥

अनभ्यस्तनेत्रे तदाश्रौघमग्ने
विलोक्य प्रियान्मृत्युलुप्ताननर्घ्यान् ।
चिरं विस्मृतोज्जीवितो विप्रयोगो
विलुप्तानि रूपाणि चेतस्तुदन्ति ॥ २ ॥

उपालब्ध-पूर्वाणि दुःखानि यानि
विषण्णेन चित्तेन तेषां क्रमेण ।
मयालोच्यते शोध्यते लेखपत्रं
यथा दीयते पूर्वदत्तं पुनश्च ॥ ३ ॥

तथापि स्मृतिस्ते यदा मामुपैति
सखे प्रेष्ठ ते चिन्तनात्खेदमुक्तः ।
अभूतोपमान्येव मन्येऽखिलानि
पुरावेद्य-दुःखानि सन्तापकानि ॥ ४ ॥

× × ×

## मृत्योरनन्तरम्

(सौ० ३२)

नीत्वाहानि निजानि यामि निधनं सन्तोषपूर्वं यदा
धत्ते धातुषु धूलि-धूसरगतिं जाल्मः कृतान्तश्च मे ।
संयोगेन यदि क्वचिद् विषयतां याता इमाः पङ्क्तयो
भूयो हीनगुणा अपि प्रियकृता आलोचनीयास्त्वया ॥ १ ॥

उत्कर्षेण युगस्य भाविततया श्रेष्ठास्तदानीन्तनाः
जायेरन् कवयो नवास्तुलनया दूरापकृष्टं ननु ।
काव्यं मेऽस्तु तथापि मामक इति स्नेहात् प्रणेतुस्त्वया
सम्मान्यं, न तु चारुताजनितया प्रीत्या तवाभीप्सितम् ॥ २ ॥

वर्धेत प्रतिभा क्रमेण युगतो जीवेत्कविश्चेदसा-
वित्येषैव मतिर्मदीय-विषये ते चेत्तदा पुष्कलम् ।
काव्यान्यन्यकृतानि तद्गतगुणैराकृष्टधीः सेवतां
मत्काव्यं तु निषेवतां प्रियजने रत्या भवान्नादरात् ॥ ३ ॥

× × ×

## वियोगः

(सौ० ५७)

करोमि किं किङ्करतामुपेत-
स्तवैव वेलामनुपालयामि ।
न मेऽवकाशः स्ववशेन नेयो
न चापि कार्यं यदनोप्सितं ते ॥ १ ॥

प्रभो न विश्वावधिशून्यकाल-
मुपालभे ते प्रहराभिरक्षी।
वियोगदुःखे न च तिक्तता मे
स्वदासमापृच्छ्य यतो गतोऽसि॥ २॥

न चेतसेर्ष्यामलिनेन शङ्के
गतः क्व वाऽसक्तमना न्यवात्सीः।
मन्ये विषादानुगतो हि दासः
प्रियान् निजांस्तु प्रतिहर्षयेथाः॥ ३॥

वशेन भावस्य जनो विमोहं
तथाधिरूढो यदनेन नूनम्।
प्रियस्य यद् यच्चरितं यथापि
विभाव्यते तत्तददोषमेव॥ ४॥

× × ×

## परिवर्तनानि

(सौ० ६०)

तरङ्गा यथा सोपलं यान्ति तीरं
त्वरन्ते तथा नः क्षणाः स्वावसानम्।
स्वपूर्वङ्गमानां भजन्ते पदानि
प्रवृत्ताः पुरः श्रेणिबद्धा यतन्ते॥ १॥

यदा जायते कीर्त्यतेऽथोत्सवेन
विवृद्धः शनैर्यौवने चाभिषिक्तः।
ग्रहैर्वञ्च्यते वार्धके क्षीयते च
ददौ जीवितं यः स कालो विरुद्धः॥ २॥

स रूपं विविध्यन् नवं यौवनस्य
श्रियो मस्तके लाञ्छनानि प्रयुञ्जन्।
निगृह्णाति कालोऽद्वितीयान् विशेषान्
न तस्यास्ति बाह्यः सृणेः प्राणिभूतः॥ ३॥

अनागते युगे मन्ये काले वहति दारुणे।
काव्यं स्थास्यति मे नित्यं तव कीर्तिविभूषितम्॥ ४॥

× × ×

## कामः कालश्च

(सौ० ६४)

विकारितान् कालकरेण याव-
ज्जराविशीर्णान् महतोऽवशेषान् ।
अट्टालकांश्चापि निपात्यमानान्
पदानि मृत्योरधरीकृतानि ॥ १ ॥
बुभुक्षितं चापि जलप्रहारै-
स्तटाधिराज्यं ग्रसमानमब्धिम् ।
तटं समुद्रात्पुनराददानं
जितं प्रदेशं च निजं क्रमेण ॥ २ ॥

पश्याम्यवस्था-व्यतिहारमेवं
तथा व्यवस्थां व्यसनाभिनिम्नाम् ।
विपर्ययं स्वात्मनि चिन्तयामि
प्रियोऽपि कालेन हरिष्यते मे ॥ ३ ॥

इदं भयं मृत्युसमं समेति
प्रियाद् वियोगो भविता ममेति ।
प्रीतिं दृढं धारयते मनस्तद्
बिभेति कालादनिवार्यभावात् ॥ ४ ॥

× × ×

## कालः कामश्च

(सॉनेट, ६५)

न धातुर्नैव पाषाणो न पृथ्वी न च सागरः ।
विषादो मर्त्यभावस्य न व्याप्तो यत्र सासहिः ॥ १ ॥

कथमस्मिन् प्रतिष्ठेत सौन्दर्यं प्रीति-संश्रयम् ।
सुकुमारोऽबलो यस्य व्यापारः कुसुमोपमः ॥ २ ॥

कियद् वा मधु-निश्वासा मधोः स्थास्यन्ति वासराः ।
कालेनाक्रममाणेन रुद्धाः संहारकारिणा ॥ ३ ॥

दुर्भेद्याश्च शिलाः कालं प्रत्यवस्थातुमक्षमाः ।
अरक्षितानि द्वाराणि कालायसमयान्यपि ॥ ४ ॥

वेपते हृदयं ध्यात्वा कालमेवं भयावहम्।
कालकोशोत्तमं रत्नं निगुह्येत क्व मे वद ॥ ५ ॥

कस्य बलवतः पाणिस्तत्पादस्तम्भने क्षमः।
कालं कः प्रतिषेधेत रमणीयापहारिणम् ॥ ६ ॥

न कोऽपि प्रभवेदस्मिन् नूनं कर्मणि दुष्करे।
कृष्णाक्षरैस्तु मे नित्यं प्रीतिस्तिष्ठेत्समुज्ज्वला ॥ ७ ॥

× × ×

## मृत्युर्विजयते

(सौ० ७१)

विलप्यतां नैव मृतो यदाहं
श्रुता च घण्टा रुषती सखेदा।
निवेदयन्ती मलिनात्प्रयातं
लोकात् क्वचिन्मां क्रिमिसार्धवासम् ॥ १ ॥

इमाश्च पङ्क्तीर्यदि वीक्षसे तनु-
निबन्धको विस्मरणीय एष।
चित्तेऽन्यथा दुःखजनेस्त्वदीये
हेतुर्भवेयं प्रियतापरोऽपि ॥ २ ॥

भूतेषु लीने मयि पद्यमेतत्
पश्यंस्तु नामापि न मे निदध्याः।
क्वचिद्वराकस्य हृदि व्यपैतु
सार्धं मया प्रेम ततस्त्वदीयम् ॥ ३ ॥

जनेऽन्यथा मादृशि बद्धकामं
विलोकयन् भाविषु वासरेषु।
लोको भवन्तं विहसेत्कदाचित्
सोल्लुण्ठनं मे ह्यविषह्यमेतत् ॥ ४ ॥

× × ×

## अगत्वरो भावः

(सौ० ७३)

ऋतुः स एवात्र विलोक्यतां मयि
यदानिलः शीत-शितः प्रधावति।
प्रकम्पिता येन भजन्ति शाखिनो
विपाण्डुराशीर्णदलाः प्रपर्णताम् ॥ १ ॥

निरुत्सवत्वं च खगैः समुज्झिता
व्रजन्ति निर्गीत-सुरालया[1] इव।
दिनान्त-सन्ध्या मयि वा विलोक्यतां
यथापरान्तेऽस्तमये रवेः शनैः ॥ २ ॥

विवर्णतां याति विलोप्यते तथा
तमिस्रया मुद्रित-लोक-नेत्रया।
यथेन्धनं भस्म-चयावशेषितं
घृणोति[2] किञ्चित्प्रभया समन्वितम् ॥ ३ ॥

तथा च यास्यत्यपि यौवने तव
दृढाङ्कितश्चेतसि मे विलोक्यताम्।
प्रगाढ-भावस्त्वयि दीप्यमानतां
जहाति यो नैव पदेऽपि गत्वरे ॥ ४ ॥

× × ×

## विरक्तिः

(सौ० ९४)

बलवतापि न येन विहिंसितं
कृतवतापि सुकर्म निगूहितम्।
नयति लोकमथाप्यचलः स्वयं
मलिन-राग-पदैर्न विलोभितः ॥ १ ॥

---

१. सुरालयाः = देवालयाः।
२. घृणु दीप्तौ।

स पुरुषो लभते दिव आशिषः
स खलु पुष्यति सम्पदमात्मनः ।
अधिपतिः प्रकृतेः स्वयमेव यत्
परिचरन्ति पदेष्वितरे जनाः ॥ २ ॥

उदय-भंग-समापित-जीविते
मधुरिमा कुसुमे न तु तत्कृते ।
मधुकृते स हि विक्रियते क्वचिद्
यदि रुजा क्रिमिहेतुकया क्षतः ॥ ३ ॥

असुभगाः कृतिनोऽपि भवन्ति ते
यदि विकारमवाप्नुवते क्वचित् ।
कमलिनी सरसी खलु पूयते
जल-दलादि-मलैर्यदि सङ्गता ॥ ४ ॥

× × ×

## वियोगः

(सौ० ९७)

वियोगतस्ते शिशिरायमाणा
मन्दप्रभा मे दिवसा अभूवन् ।
जडा यथा पौष-तुषार-वर्षैः
शून्या जरद्वत्सर-वश्य-भावाः ॥ १ ॥

चिराद् वसन्तो विगतो ममेत्थं
शरच्च भूरि-प्रसवा तथापि ।
पञ्चत्वयाते विधवेव पत्यौ
भारं तु गर्भस्य वृथा हरन्ती ॥ २ ॥

इयं प्रभूतोद्गमशालिता मे
मनोरथोऽनाथजनस्य भाति ।
मधुःससौख्यस्तव सव्यपेक्ष-
स्त्वयि प्रयाते विरुता वयोऽपि ॥ ३ ॥

गायन्ति वा मन्द-विरक्त-कण्ठा
यतश्च पत्राणि लता-द्रुमाणाम् ।
विच्छायतां यान्ति विपाण्डुराणि
हिमागमाशङ्कितमानसानि ॥ ४ ॥

× × ×

## शङ्कुच्छाया

(सौ० १०४)

न ते रूपं स्पृष्टं दयित जरयाद्यापि तरुणं
तथैवास्ते यादृक् प्रथममपि दृष्ट्या समगमि ।
ततो यातायातः सुरभि-वनवातः शुचिरपि
मधु-श्री-हासस्त्रिरपि हिमपातैर्विगमितः ॥ १ ॥

यथा शङ्कुच्छाया सरति न च दृश्यो गति-लव-
स्तथा रूपं नूनं तव हरति कालोऽप्यनिमिषम् ।
त्वदीयं सौन्दर्यं भ्रमित इव पश्याम्यविचलं
युगाद् भव्यात्पूर्वं व्रजति सुषमा हन्त निधनम् ॥ २ ॥

× × ×

## बिम्बोपासना

(सौ० १०५)

प्रीतिर्न वाच्या मम बिम्बरक्ति-
र्यथार्चकानां जगति प्रसिद्धा ।
न वा प्रियो मूर्त्युपदर्शनं मे
सदा गुणैरेव मया स्तुतः सः ॥ १ ॥

न्यायो दया सत्यमथापि भास्वद्-
गुणास्त्रयस्तत्र भजन्त्यभेदम् ।
सदाऽविकार्यां प्रतिमाममर्त्यां
कुर्वन्त्यवैषम्यगतास्त्रिमूर्तिम् ॥ २ ॥

× × ×

## भाव्यादेशः

(सौ० १०६)

अतीत-वृत्तान्त-निरूपणेषु यद्
विलोकये शूर-कथा यशस्विनीः ।
शृणोमि काव्येष्वथवा प्रशंसिताः
विलोल-लीलाः प्रमदा-जनस्य च ॥ १ ॥

यदोपमानोत्तर-रामणीयकं
भ्रुवोर्दृशोरोष्ठयुगस्य पादयोः ।
कराङ्गुलीनां च निभालयेऽद्भुतं
निरूपितं श्रेष्ठतया पुरातनैः ॥ २ ॥

तवैव नूनं श्रियमामनन्ति ते
विभिन्न-रूपेष्विति मे स्फुटं तदा ।
अदृष्टवन्तोऽपि च रूप-सम्पदं
दिशन्ति भव्यार्थ-गिरा पुरा ध्रुवम् ॥ ३ ॥

विभावयन्तोऽर्थमनागतं हृदा
निरूपणे त्वस्य बभूवुरक्षमाः ।
निरीक्षमाणास्तव वार्तमानिकीं
श्रियं स्थिता मूकतयाऽधुनातनाः ॥ ४ ॥

× × ×

## अपरिवर्त्यः

(सौ० १०९)

मा मंस्था मामसत्यं यदि मम हृदयं म्लायते त्वद् वियोगाद्
देहत्यागो भवेन्मे बहुतर-सुकरो नात्मना विप्रयोगः ।
नित्यं भावो मदीयस्तव हृदि निलयं मन्यमानः स्वकीयं
यात्रीवावर्ततेऽयं पुनरपि विषयं दूर-देशानटित्वा ॥ १ ॥

काले काले निवृत्तः समय-विनिमयं यन्न कर्तुं क्षमोऽस्मि
तन्नूनं लाञ्छनस्य स्वयमिव सलिलं क्षालनायाहरामि ।

दोषैर्यद्यप्यनेकैः प्रकृति-सहगतैः पीड्यमानो भवेयं
तत्राप्यप्रत्ययस्ते न मयि समुचितस्त्वद् गुणासक्त-चित्ते ॥ २ ॥

नास्मिंस्त्रिभुवने किञ्चित् त्वां विहायाभिमन्यते ।
मया जीवितसर्वस्वमनर्घो निधिरित्यपि ॥ ३ ॥

× × ×

## सत्या प्रीतिः

(सौ० ११६)

सम्बन्धं सत्यसन्ध-प्रणयि-जन-गतं विघ्न-बाध्यं न शङ्के
स प्रेमा नास्ति यः स्यात्प्रिय-विहितमहो विप्रियं प्राप्य लोलः ।
वातैर्धूते समुद्रे गिरिरिव सततं ध्रौव्य-सारं हि हार्दं
शुभ्रं नक्षत्रमेतद्गगन-तल-गतो नाविकाशा-प्रदीपः ॥ १ ॥

दात्रेणोद्दाम-शोभां तरुण-सुतनुगां हन्ति कालः करालः
सौहार्दं यावदायुः प्रतिपलमचलं वञ्च्यते नैव तेन ।
सर्वं चेद्भ्रान्तिपूर्णं मम लपितमिदं स्वानुभूत्या मया वा
मिथ्या चेद् दर्शितं तत् क्वचिदपि न तदा प्रेम-वस्तु-प्रसिद्धिः ॥ २ ॥

× × ×

## मनोजन्मान्धता

(सौ० १४८)

किमिव नयम-रश्मि दत्तवान्मे मनोभूः
प्रतिगत-विषयाणां यो विसंवादशीलः ।
अथ विधृत-विकारा बुद्धिरेवास्तु या मे
स्फुटतरमपि भासं नाक्षजं स्वीकरोति ॥ १ ॥

यदि भवति मनोज्ञो यत्र रक्ते दृशौ मे
कथमिव न विधत्ते प्रत्ययं तत्र लोकः ।
अवितथमथ नैवं स्पष्टमावेद्यते तन्
मनसिजकृतदृष्टिर्नाविसंवादपूर्वा ॥ २ ॥

नयन-सलिल-रुद्धा सन्ततं जाग्रती च
कथमिव निज-कार्ये दर्शने सा पटुः स्यात् ।
रविरपि भुवनानामेक-चक्षुर्न भाति
सजल-जलद-मालानाविलो नैव यावत् ॥ ३ ॥

× × ×

## मदनः

(सौ० १५४)

सुप्तोऽभून्मदनः कदाचिदिषवः
पार्श्वे तदीयाः स्थिताः ।
तत्रायाद् विबुधाङ्गना करतले
बाणान् गृहीत्वाऽक्षिपत् ॥ १ ॥
कूपे कुत्रचिदस्य नीरमधुना-
प्यातप्यते कामतः ।
नूनं शाम्यति नैव मन्मथ-रुजा
शैत्येन वारां क्वचित् ॥ २ ॥

× × ×

## मनोजन्मा (टैलमो व्हेयर इज् फैन्सी ब्रेड)

प्रभवति ननु कस्माद् ब्रूहि कामः किमेष
हृदय-समुदितो वा चेतसो वा प्रजातः ।
कथमयमभिलाषो जायते वर्धते वा
त्रिभुवन-विजयी वा विश्रुतो ब्रूहि मे त्वम् ॥ १ ॥

स्व-विषयमभिचिन्वञ् जायते लोचनाभ्याम्
अविचलित-दृशा तद्वीक्षणाद् वर्धते च ।
निधनमपि च याति स्वात्मनो दौल्यैव
डिमडिम-निनदोऽसौ कार्यतां डिण्डिमस्य ॥ २ ॥

× × ×

## मृतं प्रति (फीयर नो मोर . .)

जहिहि भयमिदानीं रौद्र-सूर्यातपाद् यत्
प्रखरतर-तुषारोच्चण्डशीतादथापि ।
कृतमिह निज-कृत्यं संसृतौ यत्तवासीत्
स्वगृहमुपगतस्त्वं वेतनं चापि लब्ध्वा ॥ १ ॥

कनक-रुचिर-भासा कान्त-तारुण्यशाली
भवतु यदि युवासौ सुन्दरी वाथ बाला ।
भवतु मलिन-चुल्ली-मार्जको वा समं ते
भुवि लुठित-शरीरा यान्ति पञ्चत्वमेव ॥ २ ॥

न खलु विषहनीया भ्रू-विकाराः प्रभूणां
कुचरित-नृपतीनां दण्डपातास्तथैव ।
अशन-वसन-चिन्ता नैव कार्याधुना ते
सममिह तव लोष्ठं काञ्चनं वापि रम्यम् ॥ ३ ॥

नरपति-धृत-दण्डो वैदुषी वाथ शिल्पं
निखिलमपि रजस्साद् भावि नात्रापवादः ।
न खलु भयमिदानीं विद्युतो युज्यते ते
न च सकल-जनानां दारुणाद् वज्रपातात् ॥ ४ ॥

अपवदति जने वा निन्दके वाऽविचारे
न भवतु तव रोषो हर्षशोकौ न ते स्तः ।
रति-मद-ललनास्ताः कामिनस्ते युवानो
ध्रुवमिह मरणान्तं प्राणिनो यान्ति सर्वे ॥ ५ ॥

× × ×

## स्वान्धत्वं प्रति*

### (मिल्टनमहाकवेः)

आयुर्नार्धमितं तथापि नयनज्योतिर्मया हारितं
लोको दीर्घतमी, प्रयोगमगता शक्तिः सुवर्णोपमा ।
लाभो नार्जित एव मूलधनतो यत्स्वामिनादायि मे
लेख्यं तस्य समर्पये कथमिति व्यग्रं मनश्चिन्तया ॥ १ ॥

---

* मिल्टनमहाकवेः । सप्तदशे क्रिस्ताब्दशतकेऽसौ बभूव, तस्य काव्ये पाण्डित्यम्, आस्तिक्यम्, उदात्तत्वम्, सङ्गीतमयत्वं च विशेषेण लक्ष्यन्ते ।

ज्योतिर्हीनतया सिषेविषुरपि व्यर्थो विना साधनै-
रेवं खेद-परीत-चेतसि बहूपालम्भ-तिक्ते मयि ।
धैर्यं तावदुपेत्य वक्ति निभृतं भाग्येन सन्तुष्यतां
तद्दत्ता तव कर्म-शक्तिरखिला नेशेन सापेक्ष्यते ॥ २ ॥

सम्राजेव नियोजितैर्भुवि जले सर्वत्र संसाधकै-
राज्ञा यस्य शिरोधृतामरगणैर्विश्वस्य सञ्चालिका ।
सेवन्ते न त एव तीक्ष्णकरणाः कार्यैरनेकैरमुं
तेऽन्येऽपि प्रतिपालनेन कृतिनः किञ्चिन्न ये कुर्वते ॥ ३ ॥

× × ×

## प्रहर्ष-देवताह्वानम्

( मूल-काव्य-गता यवन-देव-कथा-प्रचुरोल्लेखा अनुवादे त्यक्ताः । अतो मूल-काव्य-च्छायामात्रानुसारी अयमनुवादः । )

अपैतु दुःखित्वमितो जुगुप्सितं
रसातलेऽसूत गुहासु यत्तमी ।
त्रिशीर्ष-बीभत्स-शुना समागता
विराव-चीत्कार-भयानकाकृतिः ॥ १ ॥

कुरूपमावासयतां निजाश्रयं
स्थितंतमो यत्र वितत्य पक्षती ।
विहङ्गमो रात्रिचरो विगायति
नता घनच्छाय-शिलाश्च दन्तुराः ॥ २ ॥

उपेहि हास्यैक-परायणे दिवः
श्रियः प्रसादात्कुसुमैर्मधौ नवे ।
विभूषिते जन्मनि ते प्रसादिताः
दिशश्च सर्वा उषसा नु भासिताः ॥ ३ ॥

ववौ सुदूरान्मलयात्प्रवासितः
समीरणो नील-सरोज-वासितः ।
तुषार-धौतैर्विधुतैश्च पाटलै-
रपूर्वशोभा व्यधितानलामलैः ॥ ४ ॥

सुराङ्गने हास्य-विनोद-मुद्रया
मुदा समायाहि गिरा विनिद्रया।
सनर्म-वैदग्ध्य-विलास-विक्रिया-
विनर्तित-भ्रूलतयोर्दृशोः श्रिया ॥ ५ ॥

विधारयन्ती स्मित-पुष्प-मालिकां
विधूनयन्ती परिहासतः शिरः।
कृताट्टहासा परिगृह्य पक्षयो-
रशेष-चिन्ता-जरती-विदूषिका ॥ ६ ॥

अभूत-पाद-भ्रमणेन नृत्यतु
निरूपयन्ती नभसीव चारिकाम्।
लघु व्रजन्ती गिरिपक्ष-कन्यकां
स्वतन्त्रतामानयतु स्व-पाणिना ॥ ७ ॥

यथोचितं ते यदि मानमर्पये
प्रवेशनीयोऽस्म्यनुवर्तिषु त्वया।
सदैव भुञ्जीमहि सौख्यसन्तती-
रनाविला या अविनिद्रिता अपि ॥ ८ ॥

अट्टालकात्स्वादुदयाचलस्थितात्
समुत्पतन्तं गगने विहङ्गमम्।
गायन्तमालोकय भा-समुज्ज्वले
समेजयन्तं रजनिं तमोजडाम् ॥ ९ ॥

उषा यदा सा पृषती विभासते
वातायने दर्शय ते मुखश्रियम्।
लतान्तरात्पृच्छ च सौखरात्रिका
कृतार्थयाऽस्मान् प्रियदर्शने शुभे ॥ १० ॥

विरौति यावत्पटु कुक्कुटश्चरन्
सगर्वमग्रे स्ववधूजनस्य सः।
पराक्रमेणास्य पलायते ननु
तनूभवन्ती रजनी वरूथिनी ॥ ११ ॥

कौलेयकानामथ शृङ्गिणां ध्वनिः
प्रभातवेलामिव तन्द्रितां पटुः ।
विबोधयन्नद्रितटात्प्रवर्तितः
वनान्तराणि प्रतिनादयन् स्फुटम् ॥ १२ ॥

गिरौ व्रजन्ती हरितैर्वनद्रुमैः
विलोक्यसे पूर्वदिगन्त-सन्निधौ ।
यतो विनिष्क्रामति मण्डलाधिपो
ज्वलन् रविश्चित्रघनैरनुद्रुतः ॥ १३ ॥

विलोक्य सीतां मुदितः स हालिको
लयद्रुतं गायति गोप-बालिका ।
कथानुरक्ता अविपालकाः क्वचित्
सृणिं समुत्तेजयते च लावकः ॥ १४ ॥

पिशङ्गितच्छायतृणासु भूमिषु
कपोतवर्णासु खिलीकृतासु च ।
पयोधरेष्वद्रिगतेषु लीलया
समन्ततो रूपवितान ईक्ष्यते ॥ १५ ॥

उपत्यकाः कर्बुर-पाण्डु-पुष्पिताः
प्रसन्नमम्भः सरितश्च विस्तृताः ।
समुच्छ्रिताः पादप-राजयोऽद्भुताः
विडम्बयन्तीव च दुर्गमण्डलम् ॥ १६ ॥

विनिश्चरद्धूम-पताकया कुटी
समाह्वयन्तीव मनांसि दूरतः ।
निवेदयत्युज्ज्वलदीधितिं पतिं
गृहस्य मोदावहमाशुशुक्षणिम् ॥ १७ ॥

करोति पल्लीजनता स्वनेरिता
समिद्ध-रासोत्सव-सङ्गतोद्धुरा ।
सपान-मृष्टान्न-सुगन्धितानिलाः
दिशो विपञ्ची-प्रतिनाद-बन्धुराः ॥ १८ ॥

विभाति यावत्सुदिनं बहिः स्थिताः
दिनात्यये खेद-विनोदनालयम् ।
सुरोज्ज्वलं यान्ति कथास्तथाद्भुताः
स्व-वृत्तरूपाः कथयन्ति कल्पिताः ॥ १९ ॥

गताः स्वशय्याश्च निशीथचारिणा
शनैश्च निद्रां निभृतोपजापिना ।
समीरणेनापिषत क्रमेण ते
स्ववासनोद्भूत-जगद्-विहारिणः ॥ २० ॥

समुच्छ्रिताट्टालक-दुर्ग-केतने
पुरे रमन्तेऽद्भुत-दृश्य-शोभिनि ।
समुद्धतैर्यत्र विभान्ति वीथयः
सशूरसामन्तगणैः समाकुलाः ॥ २१ ॥

विभान्ति कान्त्यायत-शुभ्रलोचना
अधिष्ठिताः सभ्यपदं वराङ्गनाः ।
विदग्ध-गोष्ठीष्वथ रङ्ग-मण्डले
जयार्थिनां निर्णय-दान-तत्पराः ॥ २२ ॥

ततः समायाति विवाहदेवता
सदीपका सप्रतिशोर्षका स्वयम् ।
समुज्ज्वलाहार-विहार-डम्बरा
पुरातनं गौरवमातनोत्यपि ॥ २३ ॥

अलौकिकावेश-सरित्तटस्थितो
निदाघसन्ध्यासु कविर्विकल्पयेत् ।
विचित्ररूपाणि यथा विभान्ति ताः
विशारदैः नाट्यकथाः प्रयोजिताः ॥ २४ ॥

अपूर्व-माधुर्यगलत्स्वरावली
सुवृत्त-वागर्थ-पदैः समन्विता ।
निषिच्यतां कर्णपुटे त्वया सदा
तथा च सख्यं मम तेऽस्तु देवते ॥ २५ ॥

× × ×

## श्वः सुखाशंसा

### (डन्-महाकवेः)*

असंगतौ कथं पूर्वमभूवेत्यस्ति विस्मयः।
स्तनन्धयावेवावां किं शैशवास्वादसंगिनौ ॥ १ ॥

घुर्घुरायित-निःश्वासौ दोलायामिव शायितौ।
अनयाव कथं कालं सुखं यत् कल्पितं नु किम् ॥ २ ॥

यदि क्वचिन् मया रूपं लोचन-गोचरीकृतम्।
अभीष्टमुपलब्धं च स्वप्नाभास्तवैव सः ॥ ३ ॥

इदानीं श्वः सुखाशंसा वाच्या, नौ जाग्रतावपि।
अन्योन्यं नाभिपश्यावो हृदयाविष्टशंकया ॥ ४ ॥

प्रीत्या नियम्यते प्रीतिरशेषा विषयेषु या।
स्वावकाशो ह्यवच्छिन्नः क्रियते सार्वदेशिकः ॥ ५ ॥

सागरान्वेषिणः कामं यान्तु देशान्नवान्नवान्।
मानचित्राणि तेषां च दर्शयन्तु यथारुचि।
आवयोर्भुवनं भिन्नं प्रत्येकगतमद्वयम् ॥ ६ ॥

अन्योन्यचक्षुषोर्भाति मुखाभासो द्वयोर्मिथः।
ऋजुश्च हार्दिको भावः स्फुटमेव प्रतीयते ॥ ७ ॥

एतादृशं क्व वा लभ्यं गोलार्ध-द्वयमुत्तमम्।
निशिता नोत्तरा यत्र प्रवणा नापि पश्चिमा ॥ ८ ॥

यद्‌यन् नश्यति तन्नैव समैरवयवैः कृतम्।
स्वभाव-सदृशी प्रीतिरावयोः समलक्षणा।
सुदृढा च स्थिरा चैव मृत्युभीतिमपास्यति ॥ ९ ॥

× × ×

---

* मैटाफ़िज़िकल इत्याख्येषु गण्यतेऽसौ महाकविः। रीतित्यागः, स्वमनोऽवस्था-परामर्शः, सन्देहपरत्वं वैलक्षण्यं चाभिव्यक्तेस्तस्य काव्ये लक्ष्यन्ते।

## व्याघ्रः

### (ब्लेक-महाकवेः)*

निशा-वनान्त-र्दहसि प्रदीप्तं
भो व्याघ्र को रूपमिदं ममौ ते।
समं विभक्त चतुरस्रशोभि
भयानकं शिल्पितमो न्वमर्त्यः ॥ १ ॥

क्व वा विदूरे गगने गभीरे
जज्वाल वह्निस्तव नेत्रदीप्तः।
तं वा ग्रहीतुं सहसा करः कः
पक्षी किमालम्ब्य समुत्पपात ॥ २ ॥

स्नायूस्तवान्तर्हृदयस्य शिल्पी
को वा समाकुञ्चयितुं समर्थः।
स्पन्दो यदा तद्हृदयं विवेश
विवेश वेगोऽपि भयानकस्तम् ॥ ३ ॥

अयोधनः कः क्व च शृंखला सा
भस्त्रा च का यद्घटिताऽस्य वृत्तिः।
स्थूणापि का घोरतरा च मुष्टिः
संग्राहयामास विभीषिका या ॥ ४ ॥

निपात्य कुन्तानुडवोऽपि सास्राः
दिवं न्वषिञ्चन् जलधारयेव।
किं सिष्मिये सृष्टिमिमां समीक्ष्य
त्वदात्मिकां येन कृतोऽवि-शावः ॥ ५ ॥

निशावने व्याघ्र दृशोः प्रदीप्तः
केनासि देवेन विनिर्मितस्त्वम्।
घोरं ममे रूपमिदं त्वदीयं
मूर्तं तथाकारि भयं समग्रम् ॥ ६ ॥

× × ×

---

* रहस्यवादीत्ययं महाकविराख्यायते। आध्यात्मिकार्थसंकेतबाहुल्यं तत्काव्ये दृश्यते।

## इन्द्रधनुः

### (वर्ड्सवर्थ-महाकवेः)*

उत्कम्पते मे हृदयं यदापि
नभोगतं शक्रधनुर्विलोके ॥ १ ॥

एवं तदासीन्मम जन्मकाले
यथाधुना प्राप्तवतो वयो मे ।
तथैव यद् वार्धकमागतः स्यां
न चेत्तथा मृत्युमुपैमि नूनम् ॥ २ ॥

बालः पिता स्यात्पुरुषस्य मन्ये
तथा च काङ्क्षामि दिनानि मे स्युः ।
पूर्वापरीभावसमन्वयेन
निसर्ग-धर्मा-चरणार्पितानि ॥ ३ ॥

× × ×

## पुष्पाणि

### (तस्यैव)

मेघोभूत्वा बहु-जनपदान् पर्यटन्नेककोऽहं
तीरेऽपश्यं क्वचन सरसो व्योममार्गेण गच्छन् ।
स्वर्णोद्भासं कुसुमनिवहं दाफदिल्-वाटिकासु
वृक्षच्छाये पवन-विधुतं नृत्यमाभासयन्तम् ॥ १ ॥

ज्योतिःपुंजो निमिषति यथाभाति तारापथेऽसौ
श्रेणीबद्धा निरवधि-ततास्तेऽपि दृष्टास्तथैव ।
खातोपान्ते जलधिनिकटे नृत्य-चारी-विलग्नाः
पुष्पस्तोमा अयुत-कलना दाफदिल्-संज्ञकास्ते ॥ २ ॥

---

* वर्ड्सवर्थकविः रोमैन्टिक-काव्यधारायाः प्रवर्तकेषु मुख्यः । भाषायाः सारल्यम्, प्रसादगुणः, भावव्यञ्जकत्वं स्वानुभूतिपरत्वं बाह्यप्रकृतौ दिव्यचेतनाव्याप्तिदर्शन-मित्यादीनि लक्षणानि दृश्यन्तेऽस्य काव्ये ।

नृत्यन्ति स्म स्फुरित-मुदिताः सिन्धुलोलास्तरंगा-
स्तेभ्योऽप्येतैः कुसुम-निवहैर्दर्शिता दक्षता स्वा।
नूनं चेतः सहृदय-कवेर्हर्षतो निर्निमेषं
पश्येत्तत्त्वं किमपि विपुलं यन्न पूर्वं प्रबुद्धम् ॥ ३ ॥

दृष्टामग्रे विजन-शयितो बाह्यशून्यः कदापि
विस्रब्धोऽहं कुसुमसुषमां संस्मरंस्तां विचेताः।
दिव्यानन्दं कमपि मनसा नृत्यता भावयामि
प्रज्ञालोकः स्फुरति सहसा गूढतत्त्वावभासो ॥ ४ ॥

× × ×

## आह्लाद-प्रतिमा

(तस्यैव)

आह्लाद-प्रतिमा-प्रतीतिरुदिता साभासिता यद् दृशोः
सन्ध्याया असित-द्युतिः कचभरे ताराद्युतिर्नेत्रयोः।
वासन्ती तनु-भङ्गिरौषस-विभा तस्या मुखे दीप्यति
नृत्यन्तीव मनोहराद्भुत-रसा भावो यथामूर्तिमान् ॥ १ ॥

रूप-स्वप्न-निभापि पार्थिव-तनुर्व्यज्ञायि सा संस्तवात्
कन्या सा गृह-कार्य-दक्ष-मधुरा स्वच्छन्द-भावा तथा।
लोके यत्सुख-दुःख-पर्यय-गतैर्द्वन्द्वैर्जनः खिद्यते
तत्रास्याः सहजा रुचिर्न पटुता वृत्तेरुदात्ता हि सा ॥ २ ॥

पश्यंस्तां मनसा स्मराम्यवितथं प्राज्ञां पथि प्रस्थितां
संकल्पेन दृढां विवेकसहितां वीर्य-क्षमा-शालिनीम्।
धात्रा सान्य-तिलोत्तमेव रचिता सौख्याय मानाय च
शान्तिस्तत्र विराजतेऽथ शुचिता ज्योतिर्दिवश्चात्मनि ॥ ३ ॥

× × ×

## सन्ध्या

(तस्यैव)

सन्ध्येयं रमणीय-कान्ति-रुचिरा शान्ता विमुक्ति-क्षणा
वेला पावन-निश्चलार्चन-यतप्राणा यथा भिक्षुकी।
बिम्बं मज्जति भास्करस्य जलधौ स्निग्धे शमेऽपार्थिवे
नित्यं संचलनादिवार्णव-रवो व्याप्य स्थितो रोदसी ॥ १ ॥

भूतं तत्प्रतिबुध्यते महृदये पार्श्व-स्थिते कन्यके
ध्यानं ते न निगूढ-तत्त्व-विषये नातस्ततः प्रच्युता ।
वासस्ते हि सनातनः पितुरुरो यत्रार्च्यते नित्यदा
हार्दे गर्भगृहे प्रतिष्ठित-पदे देवः परोक्षोऽपि नः ॥ २ ॥

× × ×

## व्यवहारासक्तिः

(तस्यैव)

बाह्यार्थाननुधाव्य संग्रह-रता यामो वयं जीर्णतां
नात्मीयं प्रकृतौ कठोरहृदयाः किंचित्समीक्षामहे ।
चन्द्राय स्वत एव यद् विवृणुते सिन्धुस्तनुं हर्षतो
वाता गूहितरोदना मुकुलितैस्तुल्या नु सुप्तैः सुमैः ॥ १ ॥

रम्याणामभिवीक्षणान्न हृदये येषां रसस्योदयो
हा धिक् तान्, वरमेव पूर्वविधिना[1] प्रत्यक्ष-रूपार्चनम् ।
पश्येयं तटमास्थितो जलनिधेः पृथ्वाकृतिं[2] देवतां
शङ्खं वा शृणुयां तृतस्य[3] धमतः सम्प्लावयन्तं दिशः ॥ २ ॥

× × ×

## प्राभातिकी सुषमा

(तस्यैव)

प्रासादा नाट्यशालाः स्फुट-बहु-शिखरा उन्नताट्टालकाश्च
नावोऽप्याकार-लेखैर्धुत-पवन-पटा अन्तरिक्षं लिखन्ति ।
सानून् सोपत्यकाद्रीन् विरचयति रविः कान्ति-लक्ष्मी-समृद्धान्
वस्ते शोभां प्रभाते नगरमिदमहो स्वच्छ-मग्नांशुकीयाम् ॥ १ ॥

रूपं वा रम्यमीदृक् स्पृशति सहृदयानद्वितीयं मतं तच्-
छान्तिर्गम्भीर-भावा क्वचिदपि न मया दृष्टपूर्वाचलैषा ।
स्वच्छन्दा याति चेयं सरिदपि रुचिराः सुप्तलीना गृहाश्च
सर्वेष्वन्तर्महद् यद् हृदयमविदितं वर्तते निर्विकारम् ॥ २ ॥

× × ×

---

१. पूर्वविधिना = क्रिस्त-धर्मोदयात् प्राक्तनेन धर्मविधिना ।
२. पृथ्वाकृतिः = प्रोटियस् (यवनदेवः) ।
३. तृतः = ट्राइटन् (यवनदेवः) ।

# एकाकिनी धान्यलावी

## (तस्यैव)

क्षेत्रस्थितां पश्यत तामनन्या-
मधित्यकालब्धजनिं किशोरीम् ।
एकैव सा गायति धान्यलावी
विरम्यतां वा मृदु गम्यतां वा ॥ १ ॥

लुनाति सा नह्यति चैव धान्यं
तत्रैव गीते करुणेऽवसक्ता ।
आकर्ण्यतां पूरयतीव गीति-
रुपत्यकां निम्नतलां समग्राम् ॥ २ ॥

न नक्तगः स्वागतगीतकानि
जगौ ततो रक्ततरं कदापि ।
श्रान्ताय सार्थाय वनायुदेशे
द्वीपायितच्छाय-मरुस्थलेषु ॥ ३ ॥

प्रहर्षिणी वाक् च तथा कदापि
न शुश्रुवे कोकिलतो वसन्ते ।
प्रभञ्जती सागर-मौन-मुद्रां
सुदूर-हेब्रीड्स-तटेषु सान्द्राम् ॥ ४ ॥

न वेद्मि सा तत्र कमर्थमेवं
स्वरप्रवाहैः करुणैर्व्यनक्ति ।
सुदूर-वृत्तानि कथा व्यतीता
युधो नु सा वर्णयते कदाचित् ॥ ५ ॥

अथो नु सा प्राकृत-लोक-वृत्तं
दैनन्दिनं गायति निर्विशेषम् ।
निरूप्यते खेद-वियोग-दुःखैः
पर्याकुलो यत्र मनः-प्रवाहः ॥ ६ ॥

श्रुतं मया दीर्घतरं प्रगीतं
बाला जगौ यत्सृणिमुद्वहन्ती ।
ततो निवृत्तोऽप्यनिवृत्तचेताः
अनुस्वनद्गीतमदः स्मरामि ॥ ७ ॥

× × ×

## अनुस्मृतिः

### (तस्यैव)

पञ्चाब्दाः सम्प्रयाताः शुचि-शिशिर-कृताः पर्यया येषु दीर्घाः
श्रूयन्ते स्निग्ध-नादाः पुनरपि शिखरि-प्रस्रवन्निर्झराणाम् ।
लक्ष्यन्ते ध्यान-निष्ठा विजन-वन-गता अद्रयस्तुङ्गशृङ्गा
येषामत्रानुभावो भुवि ननु तनुते शान्तिमाकाशसंस्थाम् ॥ १ ॥

विस्रब्धः पादपाधस्तलमिह निभृतं यावदासे पुरस्ताद्
इत्येवं रम्य-दृश्यात्सहजमुपनतो नेत्र-निर्वाण-लाभः ।
कुट्यः क्षेत्राणि दूरादपरिणत-फलैर्व्यक्त-पालाश-वर्णाः
कुञ्जैरुद्यान-वाटैः सघन-तरु-दलैः शोभमाना वनान्ताः ॥ २ ॥

दृश्यन्ते पङ्क्ति-बद्धा उपवन-वृतयो राजयो वा वनानां
तद्वर्णा गोचरा वा गगनमभिगता नीरवा धूम-लेखाः ।
नूनं ता लक्षयन्ते[1] वसति-विरहितान् काननैकाश्रितान् नॄन्
वानप्रस्थं गुहास्थं विजनमुपगतं पावकासेविनं वा ॥ ३ ॥

यस्मिन् कालान्तराले चिरतर-विरहे नान्धकारं प्रयाताः
रम्याकारा इमे ते भृशमपि नगरे संस्मृता मेऽपरोक्षाः ।
प्रायः खेदं विषादं गतवति हृदये तेऽवलम्बा अभूवन्
माधुर्यं शान्तिमन्तः कुशलपरिणतिं शुद्धसत्त्वं च तेऽदुः ॥ ४ ॥

वृत्तिस्त्वन्याप्युदात्ता लघयति सुभगा जाड्यभारावनद्धं
दुर्बोधं विश्वमेतद् गमयति च शनैः प्रेरणा भावमस्मान् ।
रुद्धप्राये यतो नो रुधिर-विसरणे श्वासचारे बहिस्तः
सुप्तावन्तःप्रबुद्धाः प्रशमित-मनसा तत्त्वमालोचयामः ॥ ५ ॥

तत्त्वं मिथ्या किमेतन्न खलु नियमतो ज्ञायते मे तथापि
व्यर्थोद्वेगैः प्रवृत्तेस्तमसि भयजडैर्दुःखभेदैरनेकैः ।
आक्रान्तेनान्वभावि स्फुटमपि वयिके[2]ऽरण्यसंचारशीले
चेतोहर्षः प्रसादस्तव विदितभुवो रम्यताभावनेन ॥ ६ ॥

---

१. ज्ञापयन्ते ।

२. वयिका तन्नाम्नी नदी ।

भूयोऽप्यत्रागतस्य स्मृतिमुपगमितः पूर्वकालः पुनर्मे
चित्रं मालिन्यमन्दं क्रमश इव यथा मार्जनाद् व्यक्तिमेति ।
एवं तारुण्य-वृत्तं पुनरपि मनसा भाव्यते तद् व्यतीतं
सर्वस्वं मे तदासीत् प्रकृतिरथ गिरेर्निर्झरेषु व्यहार्षम् ॥ ७ ॥

शैलस्रोतः-प्रपातः पटुतर-निनदो नाजहान्मानसं मे
रागावेशोपमोऽसौ गिरिगहनवनोद्भासि-रूपाणि वर्णाः ।
उत्कण्ठावेगभावाः परिगत-हृदयाः प्रीतिबन्धा अभूवन्
संवेद्या निर्विकल्पाः स्फुटतर-रुचयो रम्यभासास्तदा मे ॥ ८ ॥

बुद्ध्याहार्यो न चार्थः क्वचिदपि मनसा कल्पितोऽपेक्षितो वा
नित्याकाङ्क्षा ममाभून् नयनसुभगतामात्रसक्ता तदानीम् ।
कालोऽसौ दूरयातो निरतिशय-सुखानीत-खेदोऽधुना तु
यातोऽप्युद्वेगहेतोश्चकित-मति-कृतो विभ्रमो हर्षगर्भः ॥ ९ ॥

दूये नैवात्र किञ्चिन् निज-विगत-दशाभ्यस्त-सौख्यं विचिन्त्य
संवेद्यानां विशेषा अनुभव-विदितास्तादृशा न स्फुटा यत् ।
सन्धत्ते कोऽप्यपूर्वो मनसि समुदितो भावबोधः क्षतिं मे
स्वात्मानं तत्कृतार्थं परिचित-विषये दृष्टिलाभेन मन्ये ॥ १० ॥

ज्ञातं मे दर्शनीया प्रकृतिरपि हृदा नाविवेकेन यूनः
प्रायोऽव्यक्तं श्रुतं तन्मनुज-भव-गतं निश्चलं दुःखगीतम् ।
लक्ष्यश्चात्र प्रयोगः खरमृदु-रहितो मध्यमार्गानुसारी
मर्त्यानां भावशुद्धिं प्रणयति विनयं चापि धत्ते समर्थः ॥ ११ ॥

आसन्नं मेऽनुभूतं किमपि जनयते हर्षलोला धियो यद्
भूतेष्वन्तःप्रविष्टं विलसति निलयो भास्वतो भासु यस्य ।
अम्भोधेर्मण्डलेऽपि प्रवितत-वियति श्यामले कान्तिभाजि
प्राणाधारे समीरे भुवन-जन-मनो व्याप्नुते तन्महत्सत् ॥ १२ ॥

चैतन्यं तद् गतिः सा निखिल-मतिमतां प्रेरिका गोचराणां
व्याप्तत्वात्तस्य रम्यं प्रकृतिविलसितं शैल-शृङ्गावलीनाम् ।
कान्तारोपत्यकानां घन-हरित-भुवः श्रव्य-दृश्यानुभावे
प्रत्यक्षस्यापराधं रचयति तु मनःकल्पना यत्र नूनम् ॥ १३ ॥

भाषायामिन्द्रियाणां विमलतम-धियां तत्त्व-बिम्बावभासः
प्रत्यक्षेयं तनुस्तत्प्रकृति-परिगता देशिका मे विभाति।
सा धात्री प्राणिनां सा मम हृदयमभित्रायते रक्षिभूता
निश्शेषो मे विवेकः प्रभवति हि ततः स्वामिभूतः स आत्मा[1] ॥ १४ ॥

× × ×

## नक्तंगल-गीतम्

### (महाकवेः कीट्सस्य[2])

विकारश्चित्तं मे व्यथयति तथा चेन्द्रियगणं
विमोहं तन्द्रालुं गमयति यथा जाङ्गुलरसः।
मदाद् वा मज्जामि स्मृति-हरण-पाताल-सरिति
न ह्रीर्ष्या मे तुभ्यं सुखिनि तव सौख्येन सुखिनः ॥ १ ॥

तरूणां देवी त्वं लघुतर-पतत्रे वनभुवि
क्वचिद् रागालापैर्मधुरतर-कुञ्जे विहरसि।
असंख्यच्छायाभिर्हरिततर-कान्त्या विलसिते
मधुश्री-गीतं ते सुखतरमबाधं विजयते ॥ २ ॥

गभीरे भूगर्भे चिर-निहित-शीतासव-रसः
सगीत-प्रोल्लासः कुसुम-सुरभिर्ग्राम-हरितः।
द्रवीभूतो हासोऽशिशिर-कर-सेवीव रुचिरो
निमेषैरुन्मेषैः स्फुरति सततं बुद्बुदमयैः ॥ ३ ॥

परीवाहासन्नोऽधर-सघन-रागार्पण-पटु-
र्मया पात्रे लभ्योऽरुण-मृदुल-वाङ्-निर्झर-झरः।
यदापानाद् हित्वा निखिल-जगतीं यामि निभृतं
विलीये त्वत्साधं गहन-वन-कुञ्जे हृत-हृदि ॥ ४ ॥

---

१. इतः परं मूले कानिचन पद्यानि विषयान्तरमिवोपस्थापयन्ति। अतोऽत्र त्यक्तानि।

२. 'रोमैन्टिक'-धारायाः कविः। ऐन्द्रिय-संवेदन-स्फुटत्वं सौन्दर्योपासनं माधुर्यं समाधिश्च तस्य काव्ये विशेषेण लक्ष्यन्ते। प्रस्तुते काव्ये नक्तङ्गलविहगो दिव्य-कविवाचः सङ्केतः।

विदूरालक्ष्यः स्यां विलयमिव यातः स्मृतिपथा-
दपेयान्मेऽशेषं तरु-जगति यत्ते न विदितम् ।
मनस्तापः खेदो ज्वर इव तथा चार्तनदितं
जरा-जीर्णाः केशाः क्षय-नियत-तारुण्यमपि च ॥ ५ ॥

विचारो लोकेऽस्मिन् जनयति विषादं हृदि घनं
करोत्यन्तः शून्यं स्फुरति च पुरो रूप-नियतिः ।
यथा कालो नित्यं मलिनयति कान्तिं नयनयोः
प्रियायाः कामी यद् विलपति तथा परिणतिवशात् ॥ ६ ॥

अपेहि त्वामेतुं दृगविषय-वाक्-पक्षतिधरः
स्थितः सन्नद्धोऽहं विजडितमनस्तु भ्रमति मे ।
अये सान्निध्यं ते किमिव न मयावापि चकितं
मृदुस्निग्धं नक्तं विधुरपि चकास्ति स्तृ-सदसि ॥ ७ ॥

निरालोक-प्राये हरित-जल-नीली-मलिनिते
तरुच्छाये कान्तिर्दिव इव विधोर्वात-विधुता ।
न रूपाणि प्रेक्षे भुवि चरण-पार्श्वे सुमनसां
न जाने सौरभ्यं विटप-मृदु-धूपायितमिव ॥ ८ ॥

सुगन्धि-ध्वान्तेऽस्मिन् किमिति कलयामि स्वमनसा
तृणेषु स्तम्बेषु स्फुट-फल-तरुष्वाहितमिति ।
सिताः शोणा नीलाः कुसुम-शत-भेद-व्यतिकरा
वसन्ते गुञ्जन्तो मधुकर-निवासा विलसिताः ॥ ९ ॥

मया भूयो गीतैः सुख-मरण-रागः प्रकटितो
निलीयेरन् दिष्ट्या निभृतमनिले मेऽसव इति ।
इदानीं श्यामे ते स्वर-मधुरिमा यच्छ्रुतिगतो
निशीथे मन्ये तन्निधन-समयोऽप्यागत इति ॥ १० ॥

जडीभूतः पृथ्व्यां तव निधन-गीतं क्व शृणुयाम्
अमर्त्ये वाणी ते चिर-नवतरा सर्व-रुचिरा ।
यया मर्म स्पृष्टं परभुवि रुथः कातरधियः
यया सिद्धा दृष्टिर्बहुतर-विचित्राण्यधिकृता ॥ ११ ॥

यथा द्वीपे दुर्गाद् विजन-वन-देवी-समुषिते
गवाक्षा मुच्येरन्नधिजलधि फेनोर्मि-वलये।
अयेऽतीतं गीतं वन-गिरि-सरित्-कामि करुणं
विलीनोऽसौ स्वप्नो ननु मनसि बोधः समुदितः ॥ १२ ॥

× × ×

## सैषा स्थिता यवन-शिल्पि-कृता निधानी

(तस्यैव[1])

अद्याप्यधर्षित-वधु प्रशमस्य नूनं
मौनस्य धीर-समयस्य च पोष्यपुत्रि।
वन्यैतिहासिकवरे मधुरं त्वयैवं
व्यङ्ग्याः स्वलंकृत-कथाअतिशय्य काव्यम् ॥ १ ॥

काख्यायिका वपुषि पत्रदशे त्वदीये
या देव-मानव-गणान् विषयीकरोति।
रम्यारकेडि-वसतीन् यवनान्तरीपे
केऽमी सुरा नरवराः प्रमदाश्च वामाः ॥ २ ॥

मत्तं किमेतदनुधावनमङ्कितं किं
सम्मर्दपूर्वकमरूपि[2] पलायनं वा।
वंशान्धमन्ति क इमे पटहेष्वमी के
कोऽयं समुत्सव-रसो गमितोऽतिवेलम् ॥ ३ ॥

रागाः श्रुता मधुरतां हृदि भावयन्ति
नाकर्णितास्तु खलु भान्ति विशेषभाजः।
वंशा[3] अतीन्द्रियतया धमतास्वराणि
गीतान्यपार्थिव-चिते श्रुतिपेशलानि ॥ ४ ॥

गानात्कदापि विरमेन्न शुभो युवाऽसौ
नासौ तदाश्रिततरूर्भविता प्रपर्णः।
धृष्टोऽपि वल्लभ कदापि न चुम्बितासि
स्वां वल्लभामुपगतोऽपि न संगतो यत् ॥ ५ ॥

---

१. काव्येऽस्मिन् कलाव्यक्तसौन्दर्यस्य कालजयित्वं ध्वनितम्।

२. अरूपि = रूपितम्।

३. वंशाः = हे वंशवादकाः।

मा गात्तथापि हृदयं तव खेदलेशं
नासौ गमिष्यति कदापि विहाय दूरम् ।
सेविष्यते सततमेव च पूर्वरागं
रम्याकृतिः प्रियतमा च पुरः सदैव ॥ ६ ॥

दिष्टया न हास्यथ निजं नव-पत्र-भारं
शाखा वसन्त-विभवेन युताः सदास्थ ।
अश्रान्त वादकवर प्रथमाग्रगीतं
कामः सुखः सुखतरो भवतु प्रकामम् ॥ ७ ॥

भोग्यः सदेह-मदनो यदभुक्तदीप्तः
श्वासाधिकश्च रभसाच्चिर-यौवनश्च ।
हृत्ताप-नेत्र-सलिलाविल-काम-लीलं
लोकं समुत्तरति भाति तथा च शिल्पे ॥ ८ ॥

आयान्ति यज्ञमिह के हरिताभवेदिं
कस्त्वं महाद्भुत पुरोहित माल्यपार्श्वाम् ।
उच्चारवां नयसि वत्सतरीं किमर्थं
पौराः कृतार्थमुपयन्ति कुतः पुरात्ते ॥ ९ ॥

सिन्धोस्तटे पुरमदस्सरितस्तटे वा
किं वाद्रि-दुर्ग-निहितं जन-चार-शून्यम् ।
वीथिष्वितःप्रभृति नोरवतास्य नित्यं
तद्धेतु-वर्णन-परोऽपि निवर्तते कः ॥ १० ॥

रूपं गुणैस्तव शुभं यवनोचितं च
श्वेताश्म-मूर्त-तरुण-प्रमदा-जनांकम् ।
उत्कीर्णमर्दित-तृणं वन-शाखि-शोभि
मौनास्थिते स्पृशसि नोऽद्य सनातनीव ॥ ११ ॥

जीर्यद्युगे व्रजकथे चिर-संस्थितासि
रम्यं च सत्यमिति च व्यपदेश एव ।
नार्थान्तरं क्वचिदिति प्रतिपादयन्ती
तत्त्वं परं मनुजवेद्यमभेद-रूपम् ॥ १२ ॥

× × ×

## शरद्गीतम्

**(तस्यैव)**

वलीकानभिधावन्ति या मृद्वीका लता इमाः।
गृहवृक्षाश्च ये सन्ति जलनोलि-समन्विताः ॥ १ ॥
फलभारेण ते नम्रा विधेयाः सुभगास्तथा।
विधेयाः पक्वतामोद-निर्भराः फलराशयः ॥ २ ॥
आप्यायन्तामलाबूनि पुष्पाणि विकसन्तु च।
परागपरिवाहेषु रसिका अलिराजयः ॥ ३ ॥
मन्येरन्नातपस्निग्धान् दिवसान्नित्यवर्तिनः।
इति मन्त्रयमाणेयं परिणाम-प्रदायिना ॥ ४ ॥
रविणा कृतसौहार्दा साम्प्रतं दृश्यते शरत्।
दधाना मिहिका-शोभां मृद्वीञ्च फलशालिताम् ॥ ५ ॥
अस्याः कुत्रापि लक्ष्यन्ते धान्योत्कारेषु कैतवात्।
वातेन किञ्चिदाधूताः केशा निष्पावकारिणा ॥ ६ ॥
स्वयमेव क्वचिल्लक्ष्या सीतास्वामोदशायिता।
क्षणं कुसुमजालानां लवने लब्धविश्रमा ॥ ७ ॥
धान्यसंग्रहकर्त्रीव शरत्सन्दृश्यते क्वचित्।
स्रोतसः सङ्क्रमे भारं धारयन्ती शिरःस्थिरम् ॥ ८ ॥
फलासवस्य सन्धाने परिस्रुत-परिस्रुताम्।
पश्यन्तीव विभातीयं शनकैर्धीरलोचना ॥ ९ ॥
वासन्तिकानि गीतानि वर्तन्ते कुत्र साम्प्रतम्।
माध्यासीस्तानि सङ्गीतं पुरतो भाति शारदम् ॥ १० ॥
उन्मीलयति चित्राभ्रे निमीलद्दिवसच्छविम्।
क्षेत्राणि धान्यकाण्डानि पाटलाभानि कुर्वति ॥ ११ ॥
प्रवहत्सु निमज्जत्सु वातच्छन्दोऽनुसारिषु।
वानीरेषु सरित्तीरवर्तिषु श्रूयते स्वरः ॥ १२ ॥
गणशो विलपन्तीनां दंशीनामिव दूरतः।
अमन्दं च गिरिप्रान्ताद्घोषं कुर्वन्ति मेषकाः ॥ १३ ॥
वृतिषु झिल्लिकारागो वाटीषु पिककूजितम्।
भाति कलकलश्चैव गगने शुक-संगमात् ॥ १४ ॥

× × ×

## निशा

### ('शैली'-महाकवेः[1])

नयसि दिनमशेषं स्वप्नतन्तून् वयन्ती
मुदित-शबल-भीत्या रञ्जितान्यत्र रात्रे।
लघु जहिहि गुहां ताम्पूर्वशैले निगूढां
रचय चरणपातं वारुणी-वारि-राशौ ॥ १ ॥

गगन-शिति-निचोलं तारकाङ्कं दधाना
मुकुलय दिन-नेत्रे चुम्बनैः कुन्तलैश्च।
नगर-वन-समुद्रान् पर्यटन्ती न एहि
निचित-निखिल-माया-मुद्रितालोक-दृष्टिः ॥ २ ॥

उषसि तुहिन-बिन्दुं शोषयन्तं खरांशुं
तरु-कुसुम-शयानं चापि मध्याह्न-कालम्।
दिनमतिथिमवज्ञा-ग्लान-गात्रञ्च दृष्ट्वा
मम हृदय-विनोदः काङ्क्षतस्त्वां न जातः ॥ ३ ॥

तमि[2] तव सहजातो नैव मृत्युः प्रियो मे
न च रमयति बालः स्वापनामापि मां सः।
अलस-नयन-चारुः श्रान्त-भृङ्गोपमो यः
किमपि किमपि मन्दं गुञ्जति त्वत्समीपे ॥ ४ ॥

ननु तव विगमेऽसौ नास्ति मृत्युर्विदूरे
निखिल-हृदय-निष्ठा संनिधौ चापि सुप्तिः।
तदपि न वर-याञ्चा जायते सा तयोर्यो
त्वयि भवति तमिस्रे शीघ्रमेहि प्रिये मे ॥ ५ ॥

× × ×

---

१. 'रोमैन्टिक'-कविः 'शैली','क्रान्तिकारी', 'दिव्यचेतनः' (एथीरियल), 'आध्यात्मिकः' (साइकिक), स्वातन्त्र्योपासकश्च प्रसिद्धः। अस्य काव्ये निर्बाधप्रवाहा कल्पना गगनचारिणीव भाति।

२. तमि = रात्रे।

## कस्यैचित्

### (तस्यैव)

मलिनितमभिधानं प्राक्तैर्दुष्प्रयोगात्
न खलु न खलु जिह्वा दूषयेन्मे पुनस्तत् ।
परिचितमिव भावं नाद्रियन्ते मृषैव
न खलु न खलु भावः सोऽवमान्यस्त्वया तु ॥ १ ॥

विभजतु किमिवाशां तत्समां वा निराशां
प्रभवतु वद नीतिः संयमे वानयोः किम् ।
अहह मयि दया ते चारुशीले प्रिया मे
न तुलयितुमलं सा लभ्यमानान्यतश्चेत् ॥ २ ॥

यदपि सकल-लोके प्रेम-शब्दाभिधेयं
दयित मम सकाशे नास्ति तत्ते प्रदेयम् ।
हृदय-समुदितं मे तत्र संराधनं ते
भवतु, नहि दिवः स्यात्तादृशे काप्युपेक्षा ॥ ३ ॥

अभिलषति पतङ्गस्तारकं दूरदीप्तं
स्पृहयति च निशा यद् भास्वदालोकनाय ।
सदृश इव ममायं भक्तिभावस्त्वयि स्यात्
निवससि बहुदूरे दुःख-विश्वाद् यतो नः ॥ ४ ॥

× × ×

## पश्चिम-वातः

### (तस्यैव)*

पाश्चात्त्योऽदम्यवातः प्रवहति शरदः श्वासभूतः पुरस्ताद्
यस्यादृश्यानुभावाद् द्रवति विवशितो जीर्णपर्णव्रजोऽयम् ।
मन्त्रैर्निस्सार्यमाणोऽरुण-शितिकपिशः प्रेतसंघो यथा स्याद्
रोगाद्वा कान्दिशीको जनपदविसरो मारकाद्धावतीव ॥ १ ॥

सारथ्ये बीजवारस्तव ननुडयते शैशिरावासहेतोः
शेते भूगर्भमध्ये शव-निवह-समस्तावदाकांक्षमाणः ।
यावत्तूर्यस्वरेण प्रसवमुपदधद् बोधयन् जालकानि
शैलेषूपत्यकासु प्रविततहरितः पुष्पकालः समेति ॥ २ ॥

* क्रान्तिदूतसंकेतोऽत्र पश्चिमवातः ।

स्वच्छन्दा चेतना ते विचरसि सततं व्याप्य विश्वं समग्रं
त्वं रुद्रोऽथापि विष्णुर्हरसि जगदसूंस्त्रायसे चापि नित्यम् ।
श्वासस्ते शीर्णपर्णः शरदि पुनरसौ वाति वासन्तिकोऽपि
रक्षन् सौरम्यवाही प्रणिहित-विभवो लोकमुज्जीवयंश्च ॥ ३ ॥

उत्तुङ्गे रंहसा ते नभसि जलधिजा वारिवाहा विशीर्णाः
पर्णौघा जीर्यमाणा दिव इव पतिता वैद्युता वर्षदूताः ।
दूरादालक्ष्यते तेऽसित-सरणितलोद्धूयमानालकान्तम्
आशीर्षं खे प्रधावत् क्षितिजपरिधितो मारुतं तीक्ष्णवृन्दम् ॥ ४ ॥

एषा वर्षान्तरात्रिर्निधनमिव कलैस्त्वत्स्वरैर्गायतीव
बाष्पौघैः स्तम्भितं ते निहित-मृत-नभो-मण्डल-च्छन्न-चैत्यम् ।
भावी यस्माच्च कृष्णोऽशनि-सित-करकाचित्रितो वर्षपातः
वेगाद्वायोऽन्तरिक्षं स्फुटितमिव भवेच्छ्रूयतां मे हवोऽद्य ॥ ५ ॥

आग्नेय-द्वीप-पार्श्वे प्रसृत-जल-भुजो बाय-तीर्थोपशायी
भूमध्ये श्यामकान्तिः स्फटिक-निभ-सरित्-पाश-दोलायमानः ।
सौधानट्टालकांश्च प्रमुदितकुसुमान् स्वोर्मिषु भ्राजमानान्
स्वप्ने पश्यन् निदाघे परिमल-विवशोऽबोधि सिन्धुस्त्वया हे ॥ ६ ॥

मार्गे तेऽट्लान्टिकोऽसौ सलिल-विषमताजन्य-गर्तानुबन्धी
यस्याधस्ताच्च दूरे तलरुहविरसा वीरुधोऽन्यानि यानि ।
गर्भस्थान्यम्बुराशेरुरुविविध-वनान्यद्भुतान्याततानि
वैवर्ण्यं वेपथुं च प्रतिरव-महतो घोषतस्ते प्रयान्ति ॥ ७ ॥

जीर्णं पर्णं यदि स्यां द्रुत-घन-शकलं वा हरेर्मां यथेष्टं
यद्वा मुक्तात्मनाम्भस्तरलितलहरी प्रेर्यमाणा त्वया स्याम् ।
स्पर्धा ते यत्र बाल्ये गतिलघिमनि मे धावतोऽभूदनु त्वां
कालोऽसौ हन्त यातः, सरणिनिपतितः कण्टकेषु क्षतोऽहम् ॥ ८ ॥

मानी स्वच्छन्दवृत्तिर्लघुगतिरपि ते शीलसाम्यं बिभर्मि
याता[1] कालेन बद्धो दृढ-निगड-गुणैरद्य दुर्दैवदीनः ।
साजात्यात्प्रार्थये त्वामयि सततगते मामतः क्षीणसत्त्वं
मेघान् पर्णानि वीचीर्वहसि मृदुसुखं तद्वदुद्धारयेथाः ॥ ९ ॥

१. याता = गच्छता ।

वीणां मां कल्पयेथा वनमनुरणितं सार्यमाणं यथा ते
नूनं मेऽप्यंग-यष्टिर्विगत-तरुणिमा शीर्णपर्णा वनीव।
संवादस्ते स्वराणां व्यतिकरसुभगो व्याप्नुते चक्रवालं
छायां गृह्णंस्तथास्मत् करुणमधुरतां शारदीं व्यञ्जयंश्च ॥ १० ॥

उद्दामात्मन्ममात्मा भव निज-सहसा विश्वमाक्रामसि त्वं
पर्णौघं जीर्णशीर्णं वहसि भुवि यथा नूतनोन्मेषहेतोः।
एवं संरोपयेथा दिशि दिशि विकिरन् मे धियः कालयाता-
श्छन्दःसिद्धाः प्रजाभ्यो वितर मम गिरो विस्फुलिंगोपमाश्च ॥ ११ ॥

शान्तप्रायस्य वह्नेः कणनिकरखरं भस्म दोधूयमानो
भूयो गर्भोन्मुखत्वं विरचयसि भुवः प्रेरयैवं गिरो मे।
ताभिः सम्बोधयेथाः शयितमिव जनं भावि-सन्देशतूर्याद्
वायो पुष्पाकरोऽसौ शिशिर उपगते नूनमासन्न एव ॥ १२ ॥

× × ×

## रतिप्रियः

(तस्यैव[1])

विलपामि वियोगशोकतो
विगतो हन्त सखा ह्यसौ प्रियः।
शिखिना ग्रसितः पुनर्ननु
रतिनाथो हरनेत्रजन्मना ॥ १ ॥

जगती निखिलापि साम्प्रतं
भजतां, नैव विमोक्षमेष्यति।
स शिलोपम-जाड्य-बन्धनान्
न रविर्यत्र रजो न लोक्यते ॥ २ ॥

प्रहरा अतियन्ति दुःखदा
अयमेको न निवर्तते खलु।
अथवा प्रहरीकृतश्चिरं
स्मृतिरक्षी भविता भविष्यति[2] ॥ ३ ॥

---

१. मूलस्याल्पीयसीमेव च्छायामनुवादोऽनुसरति। संक्षिप्तश्चायम्।

२. भविष्यति = अनागते।

जननी महती क्व विस्मृता
तमसाच्छन्नशरोऽवधीत् सुतम् ।
किमु सा प्रतिशब्द-गुञ्जिते
निजलोके हृतलोचना स्थिता ॥ ४ ॥

धरणीपरिलुण्ठितः श्वसन्
स हि गीतै-र्निधनावरोहिभिः ।
कुसुमैरिव भूषयन् भुवं
यमराजं विहसन्निव स्थितः ॥ ५ ॥

विलपेन्नु शुचा विबुध्य सा
शयिताम्बा वरमस्तु निःस्वना ।
ज्वलदश्रु-निमग्न-वीक्षणा
निभृतं पुत्रसमा जडा हृदि ॥ ६ ॥

अनिवर्तितया ययावसौ
रमणीया निखिलाः प्रयान्ति यत् ।
लवणाम्बु-विवर्धनादयं
न परोवाहमुपैति सागरः ॥ ७ ॥

शिशिरः पुनरेति याति च
मम शोकोऽपि तथा नवीकृतः ।
सरितो मरुतः प्रहर्षिताः
पुनरुद्यान्ति खगाः पिपीलिकाः ॥ ८ ॥

नव-वत्सर-शीबिकागतै-
र्नवपत्रैः कुसुमैर्व्यदीप्यत ।
मिथुनैर्विहरन्ति पक्षिणो
नवनीडान् रचयन्ति चोत्सुकाः ॥ ९ ॥

हरितास्तपनीयभास्वराः
कृकलासा उरगा विनिद्रिताः ।
जडभावमपास्य तेऽधुना
दहनस्येव विरेजिरे शिखाः ॥ १० ॥

निखिलं विजह्नौ तदस्तितां
भजते यत्र मनोऽनुरागिताम् ।
ऋतुरत्र निरुत्सवश्च्युता
प्रियवेला विरसानुवर्तते ॥ ११ ॥

अपताम वयं कुतो भुवि
किमु लक्ष्यं किमु भोग्यमस्ति नः ।
पुरुषाः सममुत्तराधराः
अधमर्णा इव मृत्यु-निर्जिताः ॥ १२ ॥

धरणी हरिताऽथ नीलिमा
दिवि यावद् भविता रुचा ध्रुवम् ।
निशया दिवसोऽनुयास्यते
प्रतिकालं भविता विपर्ययः ॥ १३ ॥

उदिते प्रभवोऽण्डजन्मनां
मिहिरे याति निरोध एव च ।
किमु जीवितमप्रभातकं
प्रतिबुद्धा उडवोऽपि यत् पुनः ॥ १४ ॥

मनुजेष्वनुवर्तते क्रमोऽ-
पुरुषेणापि दिवाकरद्युता ।
धवलीक्रियते नभस्ततो
निजकान्तिः स्तृषु धीयते यता ॥ १५ ॥

अथवा न मृतो न निद्रितः
स भव-स्वप्न-भयाद् विमुद्रितः ।
वयमेव विकल्पवात्यया
मुषिता विभ्रम-रेणु-रूषिताः ॥ १६ ॥

मनसा परिखेदिता वयं
प्रतियामं विकृतिं भजामहे ।
उपयन्ति च ये मृदन्वये
विजडाशाक्रिमयः कलेवरे ॥ १७ ॥

उदपप्तदसौ दिवं कृती
तमसः पारमियाय संसृतेः ।
प्रभवन्ति न यत्र तापकाः
ज्वलदीर्ष्या-परिखेद-मत्सराः ॥ १८ ॥

मुमुचे स ततोऽपि दुःखतः
सुखनाम्ना व्यपदिश्यते तु यत् ।
पृथिवीरजसोऽह्यनाविलः
कृति-भोगानिल-धूत-संचयात् ॥ १९ ॥

विरसं हृदयं न शोच्यते
न जरा तत्र वृथा सितालका ।
ज्वलति प्रभया विधूमया
न च भस्मापि निधीयतेऽन्ततः ॥ २० ॥

युयुजे जगदात्मना समं
श्रुतिमायान्ति गिरोऽस्य विस्फुटाः ।
मृदु-तिग्म-निसर्ग-गीतिषु
स्तनयित्नोर्निशि कोकिलस्य वा ॥ २१ ॥

अविकारि तदेकमेव सद्
विकृतिं यान्ति बहूनि नित्यदा ।
दिवि तिष्ठति भाः समुज्ज्वला
प्रतिबिम्बा भुवि यान्ति चञ्चलाः ॥ २२ ॥

शबलैः शिखरोऽर्धगोलकः
शकलैः काचमयैर्विनिर्मितः ।
निधनावधि चित्रयेत्प्रभा-
मविभागामपि जीवितं यथा ॥ २३ ॥

× × ×

## निपत निपत

### (महाकवेः टैनिसनस्य)*

निपत निपत सिन्धो दीर्यमाणः स्वतीरे
विजड-शिति-शिलासु स्वोर्मिभङ्गैर्हताशः ।
कथमिति रसना मे भावराशिं प्रवक्तुं
प्रभवति हृदिजातं प्रेर्यमाणाप्यवार्यम् ॥ १ ॥

---

* टैनिसनो विक्टोरियायुगस्य मुख्यो महाकविर्विकासवादकृतास्थो दार्शनिकस्वभावः । तस्य रीतिः प्रसादमाधुर्यगुणा निगूढकरुणध्वनिः ।

विलसति स कुमारो दाशपुत्रो भगिन्या
पुनरपि तटखाते नाविको गीतमोदी ।
जलनिधि-गत-पोतः स्वाश्रयं याति धीरः
क्वचिदपि न लभे तत्पाणि-संस्पर्श-लेशम् ॥ २ ॥

श्रुतिपथमपि वाणी नाधुना याति तस्याः
नयनपथमिदानीं सापिलुप्ता दिनश्रीः ।
न खलु न खलु भूयः प्राप्नुयान्मे कदाचित्
निपत निपत सिन्धो दीर्यमाणः स्वतीरे ॥ ३ ॥

× × ×

## ते हि नो दिवसा गताः

### (तस्यैव)

यावत्तान् मनसा स्मरामि दिवसान् कालेन निश्शेषितान्
आपश्यामि च शारदीं नयनयोः प्रत्यक्षभूतां श्रियम् ।
अश्रूणि प्रभवन्ति मे हृदयतोऽविज्ञात-हेतून्यपि
नैराश्यान्नु कुतोऽप्यलोकविदितादर्थानुसन्धि विना ॥ १ ॥

प्रत्यग्राणि दिनानि तानि किरणा आद्या यथा नौपटे
ये शंसन्त्युपयास्यतो नु सुहृदो लोकान्तरादुद्धृतान् ।
दुःखानि प्रतिभान्ति तानि किरणा अन्त्या यथा लोहिता
यैर्मज्जन्ति च बन्धवोऽब्धिकुहरे दुःखा सुखा च स्मृतिः ॥ २ ॥

आसन्ने निधने गवाक्षपटले मन्दायमानप्रभे
प्रत्यूषे तमसि प्रयाति विहगैरारम्यमाणे रवे ।
संवेद्यः स यथा निदाघसमयः खेदावहोऽप्यद्भुतो
यातास्तेऽपि तथा विभान्ति दिवसाः संस्मर्यमाणा हि नः ॥ ३ ॥

स्मृत्यां वा प्रियचुम्बनानि मनसा सम्भाव्यमानानि वा
प्राप्तैर्दूरतराणि तेऽपि दिवसा अस्माकमेवं गताः ।
उद्दामः प्रथमो मनोभव-कृतो भावो गभीरो यथा
स्वाद्यश्चाप्यनुशोच्यते च विगतः कालेऽपि जीवन्मृतिः ॥ ४ ॥

× × ×

## डोवर-वेला

### (आर्नल्ड-महाकवेः)*

अक्षुब्धः पूर्णवेलो जलनिधिरधुना भ्राजते शुभ्रचन्द्रः
तीरे फ्रान्सीय-पार्श्वे स्फुरति पुनरसौ दीप्तिरस्तंगता च ।
आंग्लीये त्वम्बुराशेस्तट-विपुल-शिला मन्दमाभासमाना
दृष्टिं कर्षन्ति रात्रौ मृदु-पवन-हताः पश्य वातायनाग्रात् ॥ १ ॥

लक्ष्या वेलानिवृत्तेः शशिकर-धवले सैकते फेन-लेखा
यामायातैस्तरङ्गैः प्रविचलदुपलैर्गर्ज्यते कर्कशं च ।
भूयो भूयोऽवरोही प्रसरदपसरद्वारि-राशेर्विकम्पी
सम्भूतो मन्द्रमन्द्रो निधनमुपसरन् नित्य-दुःख-स्वरोऽयम् ॥ २ ॥

वेला-पर्यायवद् या मल-निवृत-दशा क्षीयते पूर्यते च
संसारे दुःखभूता मनुज-सहगता व्यापयन्तं पुरा ताम् ।
अश्रौषीन्नाट्यकारः स्वरमिममुदधेर्यावनोऽसौ सफोक्लीज्
दूरेऽस्मिन्नुत्तरेऽब्धौ वयमपि शृणुमो व्यक्त-दुःखं** तमेव ॥ ३ ॥

पूर्वं श्रद्धा-समुद्रः परिगत-धरणिर्मेखलेवोज्ज्वलासीद्
अद्यत्वे लोकतोऽसौ व्यपसरति ततो नीरसा भूतटान्ताः।
यत्र स्तीर्णा विवर्णा गत-जल-वसनाः शर्करास्तत्र चास्य
दीर्घः कारुण्य-रावः श्रुति-पथ-विषयो नैश-वाते विलोपी ॥ ४ ॥

प्रेमा नः सत्यसन्धो भवतु, बहुविधे स्वप्न-रम्येऽहि लोके
विद्यन्ते नैव हर्ष-प्रणय-रुचि-शमा नापि दुःखान्निवृत्तिः ।
आश्वासो नैव लभ्यः क्वचिदपि भुवने वर्धमाने तमिस्रे
युध्यन्ते तत्र सेना जनित-कलकला मोह-राज्येऽविवेकाः ॥ ५ ॥

× × ×

---

* अयं महाकविरपि विक्टोरियायुगाविर्भूतो दर्शनासक्तो मधुरस्पष्टस्वरः ।

** बहुव्रीहिः ।

## परिव्राजक-विद्वान्

**(तस्येव)**

ह्वयन्ति शैलादविपाल याहि
कुटीरमुन्मोचय पश्वगारम् ।
व्रजस्त्वदीयो न बुभुक्षितः स्याद्
न ते सखायोऽपि विशुष्क-कण्ठाः ॥ १ ॥

न च प्ररोहेयुरितोऽधिकं च
तृणानि विच्छिन्न-शिखानि यावत् ।
स्थिरा च केदार-ततिर्यदा स्यात्
नक्तं मनुष्याः शुनकाश्च सुप्ताः ॥ २ ॥

ज्योत्स्नावदातेषु च शाद्वलेषु
सितावयो यद् विचरन्ति केचित् ।
तदा त्वमायाहि पुनः स्वकं च
लक्ष्यं समाराधय दत्तचित्तः ॥ ३ ॥

पूर्वाह्णमापुञ्जित-धान्यगुच्छः
श्रान्त्वाऽत्र विश्राम्यति धान्यलावः ।
क्षेत्रे निधायोच्च-निरातपे च
स्व-कण्डिकां पात्रमथोत्तरीयम् ॥ ४ ॥

यूथान्यवीनां विरुवन्ति दूरे
लपन्ति वृन्दानि च लावकानाम् ।
श्रृणोमि सम्पृक्त-रुतानि तानि
शुचेरिवाव्यक्त-पटु-स्वराणि ॥ ५ ॥

धान्यान्तरालक्ष्य-विलोहितानि
पुष्पाणि नालानि च पाण्डुराणि ।
मूलानि कान्त्या हरितानि चैव
लता-प्रतानैर्ग्रथितानि पश्यन् ॥ ६ ॥

मरुत्-समाधूत-शिख-द्रुमाली-
प्रवर्षितामोद-भरे च शादे।
छायासु शय्यां परिकल्प्य कालं
नयामि यावद्रविरस्तमेति ॥ ७ ॥

उक्षाख्य-तीर्थस्य विलोकये तान्
अट्टालकान्पार्श्व-गतां कृतिं च।
ग्रान्वील-नामा व्यलिखत् कथां याम्
उद्दिश्य यायावर-पण्डितं तम् ॥ ८ ॥

विद्वान् स दीप्त-प्रतिभा-सनाथो
विद्यालये किन्त्वनवाप्त-वृत्तिः।
भेजे विरक्तिं निज-यूथ्य-वर्गा-
ज्जगाम यायावर-संघ-मध्ये ॥ ९ ॥

स एकदा ग्राम-पथेषु दृष्टः
सब्रह्मचारि-द्वय-संगतश्च।
पृष्टश्च ताभ्यामवदन्नवीन-
स्व-यूथ्य-यायावर-शील-वृत्तम् ॥ १० ॥

विद्यास्ति तन्मध्य-कृत-प्रचारा
यया विजानन्ति परस्य चित्तम्।
स्व-कौशलेनाथ वशं नयन्ति
विद्या प्रकाश्या यदि सोपलब्धा ॥ ११ ॥

विद्या-रहस्यं निहितं सुगुप्त-
मभिज्ञ-वर्गेण तथापि लभ्यम्।
प्रकाशनायेति ततो निवृत्तो
न चापि दृष्टः पुनरन्यदा सः ॥ १२ ॥

पुरातनाकारमुपादधानो
वस्त्रं शिरःशोभि तथोत्तरीयम्।
कपोतवर्णं च विलोकितः सः
ध्यायी भ्रमन् मौनगतः कदाचित् ॥ १३ ॥

इति प्रवादः प्रथितस्तथापि
वसन्तकाले मिलितोऽविपालैः ।
दृष्टोऽथवा पान-गृहेऽपरैश्च
स पामरैरासन-संस्थितोऽपि ॥ १४ ॥

वेद्मीव यायावर रूपतस्त्वां
पृच्छामि यूनः किमु दृष्टवन्तः ।
क्षेत्रेषु शून्येषु भवत्प्रचारं
शस्येषु रक्षाधिकृता यदा ते ॥ १५ ॥

निदाघ-काले जल-शीत-तीरे
नौका-शयालुः पृथु-शाद-पार्श्वे ।
वीक्षे गिरोनातपशोभिनस्तान्
निलीयसे क्वेति च चिन्तयामि ॥ १६ ॥

व्यलोकयन् ग्रीष्म-विभावरीषु
केचित्सरित्तीर्थगतं भवन्तम् ।
चन्द्रांशु-संस्पृष्ट-जलं स्पृशन्तं
ध्यानस्थमङ्कस्थित-पुष्पराशिम् ॥ १७ ॥

नृत्यार्थमालक्षि समागतेन
दूरादपि ग्राम-वधू-जनेन ।
श्यामायमाने विचरन् भवान् वा
क्षेत्रेऽथवा मार्गमतः प्रविष्टः ॥ १८ ॥

प्रत्यग्रहीषुर्भवतो युवत्यः
पुष्पाणि नानारुचि-रूपितानि ।
श्वेतानि नीलानि च लोहितानि
सिक्तानि सन्ध्या-निभृतं तुषारैः ॥ १९ ॥

पलाल-रूक्षे च निदाघ-काले
भास्वत्सु दात्रेषु रवेस्त्विषा च ।
वेल्लत्सु शादेषु नदीजलेषु
कृष्ण-स्फुरत्पक्षि-निषेवितेषु ॥ २० ॥

स्नानार्थमायात-जनैरलोकि
निषेदिवांस्तीरमुदग्र-दर्भम् ।
विचित्र-वेशः कृश-काय आरात्
क्वचिद् भवान् ध्यामल-शून्य-दृष्टिः ॥ २१ ॥

कम्नर-गिरि-श्रेणिषु निर्जने च
निरर्गल-द्वार-गृहस्थ-नार्या ।
वस्त्राणि सायं प्रतिसन्दधत्या
विलोकितो वा क्वचिदेव यातः ॥ २२ ॥

द्वारं समाश्रित्य निरीक्षमाणः
खले यवं धान्य-विमर्दकान् वा ।
दृष्टोऽथवाद्रि-प्रवणे प्रयातै-
र्बालैश्चिरं निर्झर-केलि-लग्नैः ॥ २३ ॥

वासन्तिकं वासरमेव दीर्घं
पश्यन् क्वचिद् गोचर-चारिणीर्गाः ।
यावन्नभस्तारकितं ततश्च
गच्छन्नवश्यायि-तृणेषु मन्दम् ॥ २४ ॥

बैग्लेवनान्ते च शरद्दिनेषु
यायावर-स्थापित-वस्त्र-वासे ।
क्षुपेक्षु पुष्पैः सितपाटलेषु
खगैः क्वचिन्निर्भयकीर्तितो वा ॥ २५ ॥

व्रजन्नभीक्ष्णं मनसा प्रतीचा
गतश्रियं मञ्जरिकां दधानः ।
अन्यस्थभावो भ्रमयन् कराभ्यां
प्रतीक्षमाणश्च दिवः प्रबोधम् ॥ २६ ॥

दृष्टो न किं त्वं शिशिरे कदाचित्
जल-प्लुत-क्षेत्र-तलोच्च-मार्गे ।
प्रावारनद्धो हिम-पात-योधी
हिक्सीं व्रजन् दारव-संक्रमेण ॥ २७ ॥

आरुह्य कर्म्नगिरि-शेखरं च
सितं परावृत्य ततोऽनुपश्यन् ।
हिमस्य पातं सघनायमानं
क्रिस्तीयशालोत्सव-दीप-मालाम् ॥ २८ ॥

स्वप्नो ममायं यदतीतमेतद्
शतद्वयं प्रद्रुत-वत्सराणाम् ।
कथा यतस्ते प्रसृतोक्षतीर्थे
लिलेख यां ग्रेन्विल-नामकोऽसौ ॥ २९ ॥

विचित्र-विद्या-ग्रहणाय जिप्सी-
गणेन देशानटतस्ततस्ते ।
श्मशानशायित्वमियाय कायश्
छायासु कृष्णारुण-यू-तरूणाम् ॥ ३० ॥

प्रयान्ति कालेन नराश्चलेन
दशान्तराणि व्यसनोदयाभ्याम् ।
वीर्यं तथायुः क्षपयन्ति भोगात्
कर्मार्पयन्ति स्वकमात्मने च ॥ ३१ ॥

अनित्यभोगेषु विरक्त-चेताः
ज्ञानैकलक्ष्यो मरणादतीतः ।
अलोकसामान्यतया विभासि
ग्रान्वील-पृष्ठांकित-कीर्ति-मूर्तिः ॥ ३२ ॥

असंशयोऽक्षीणपराक्रमस्त्वं
सन्न्यस्तवान् संसृति-बन्धनानि ।
सहस्रधा मोहबलेन किन्तु
विखण्डितं जीवितमस्मदीयम् ॥ ३३ ॥

दिवः प्रकाशार्थतया स्थितोऽसौ
वयं तु सन्देहपदादमुक्ताः ।
श्रद्धेन्द्रियं नास्ति न चापि वीर्यं
स्खलत्पदाः स्मो विचिकित्समानाः ॥ ३४ ॥

भूयिष्ठ-दुःखो भवतीह कश्चित्
प्राज्ञासनं खिन्नमना निषद्य।
दुःखानुभावं स्व-वचः-प्रसारै-
र्व्यनक्त्युपायांश्च विनोदनार्थम् ॥ ३५ ॥

प्राज्ञोऽपि नो दुःखभरान्न मुक्तः
कथं वयं स्याम ततो विमुक्ताः।
आशास्महे व्याकुलतृष्णयैव
सौख्यस्य, धैर्यं बहुमन्यमानाः ॥ ३६ ॥

आशास्मदीया न तथा यथा ते
क्षेत्रेषु नाना व्रजतो वनेषु।
स्वैरं स्वनिष्ठामुदितस्य नूनं
चिर - व्यपेताखिल - संश्रयस्य ॥ ३७ ॥

प्रज्ञा तदासीद्विमला नवा च
यात्रापि लोकस्य सरित्प्रसन्ना।
युगे त्वदीये, विपरीतमस्मिन्
सर्वं युगे मोहवशेऽस्मदीये ॥ ३८ ॥

अनेक-दिग्भ्रान्त - मनोरथेऽस्मि-
स्त्वरातुरे कम्पनरोगिणीव।
परापतास्मात्सुविदूरमाशु
विचित्र-रोगाच्च युगान्नवीनात् ॥ ३९ ॥

परेहि कुञ्जेषु वनेषु दूरं
पराणुदास्मान् सुविविक्तसेवी।
आशामजेयां हृदये दधान-
श्छायामधृष्यां च शरण्यभूताम् ॥ ४० ॥

नक्तं नुदन् कानन-पत्र-शाखा-
श्चन्द्र-प्रभा - रोपित - राजताभाः।
आविर्भवन् गोचर-भूमि-भागे
तुषार - सेकोज्ज्वल - पुष्प - हस्तः ॥ ४१ ॥

आकर्णयन् कार्मणकृष्टयेव
श्रुत्या प्रगीतानि निशा-खगानाम् ।
विवर्जयास्मत्परितप्त-सङ्गं
मार्गं च यस्मिन् वयमाचरामः ॥ ४२ ॥

अस्माभिरासङ्गमवाप्य चित्तं
सम्पत्स्यते तेऽपि शमादपेतम् ।
गतप्रसादश्च ततस्ततस्त्वं
सत्त्वक्षयाद् भीरुमनोरथश्च ॥ ४३ ॥

अथापगच्छेच्चिर-यौवनं ते
भवेज्जरा-मृत्यु-भयं च भूयः ।
उदास्स्व नः स्वागतवाक्स्मितेषु
व्यपेहि दृष्टान्तमिह स्मरामि ॥ ४४ ॥

धीरो यथा सैन्धव-सार्थवाह-
स्तूर्यात् प्रभाते यवनोषितेषु ।
नौशीर्षमाविर्भवदीक्षमाणो
द्वीपेषु तीरान्त-लतालकान्तम् ॥ ४५ ॥

द्राक्षासवोदुम्बर-मत्स्य-भारैः
पोतं समृद्धं यवनेश्वराणाम् ।
विचित्य कीर्तिर्वितता यदीया
कल्लोलमालासु महासमुद्रे ॥ ४६ ॥

अरित्रमादाय पटं प्रसार्य
नक्तन्दिवं याति ततोऽपसृत्य ।
भूमध्य-नीलाम्बुधितोऽनुवातं
महार्णवं भीमरवं प्रतीच्याम् ॥ ४७ ॥

फेनायमानं च तटं समेत्य
कादम्बिनी-मण्डित-शैलपादे ।
पण्यार्थमागामिगणैरुपेये
निर्वेष्टयेतापि च भाण्डजातम् ॥ ४८ ॥

× × ×

## हेलेन

### (एड्गर-एलेन-पोनाम्नः कविवरस्य)*

रूपं त्वदीयं मनसा विचिन्त्य
स्मरामि वातेरित-धीर-पोतम् ।
द्वीपान्तर-प्रोषित-पान्थवाहं
सुगन्धि-पाथोधि-तले तरन्तम् ॥ १ ॥

हताश-विक्षुब्ध-महाब्धिमध्ये
चिरं मुखश्रीस्तव विभ्रमन्ती ।
दिव्येव गीतिः प्रथयत्यजस्रं
पुरातनीं कीर्तिमथो विभूतिम् ॥ २ ॥

पश्यामि तत्र प्रतिमा-सरूपां
वातायन-प्रान्तमधिष्ठितां त्वाम् ।
प्रभोज्ज्वलां पाणि-मणि-प्रदीपां
विद्यां स्वधाम्नः समुपागतां ताम् ॥ ३ ॥

× × ×

## इनिसफ्री

### (डब्लू० बी० येट्सस्य महाकवेः)**

ह्रदगतमभियास्यन्नन्तरीपं प्रतिष्ठे
सपदि रचयितव्या तत्र काचित्कुटी मे ।
नव नव कुसुमास्थान्पोषयिष्यामि माषान्
मधुकर-मुखरायां वन्य-भूभावनन्यः ॥ १ ॥

---

* अयं कविवरः कौतुककथालेखकत्वेन प्रसिद्धो यानि विरलानि काव्यानि निबबन्ध, तेषु लक्ष्यतेऽद्भुतो रचनापरिष्कारो भावसौकुमार्यं च ।

** आयर-देशाभिजनोऽयं महाकविराधुनिकेषु परां प्रसिद्धिं गतः । नानाप्रकारेष्वस्य काव्येषु भावनिबिडता, सङ्केतबाहुल्यं, तात्त्विकत्वं च लक्ष्यन्ते । प्रसन्नगम्भीरा विलक्षणा चास्य रीतिः ।

शम-लवमुपलप्स्ये तत्र निष्यन्दतेऽसा-
वुषसि रुचि-वृतायां झिल्लिकानां प्रगीते।
द्युति-मसृण-निशीथं भाति मध्यन्दिनं च
परभृत-समुदायात्पक्षिणी यत्र सन्ध्या ॥ २ ॥

सपदि जिगमिषा मे तत्र, नक्तन्दिवं च
ह्रद-तटमुपवेल्लद्वारि-रावं शृणोमि।
क्वचिदपि पथि यातः कुट्टिमे वा विवर्णे
निभृतमिव हृदि स्वे तद्रुतं भावयामि ॥ ३ ॥

× × ×

## विस्रम्भ-सन्ध्या

(तस्यैव)

विभिन्न-दिग्भ्यः प्रभवन्ति भावाः
प्रवृत्तयश्चैव समानरूपाः।
सत्त्वादयो यत्र गुणा लसन्ति
सितारुणश्यामलकान्तिभाजः ॥ १ ॥

प्रसादमाविष्कुरुते निगूढं
प्रभात - वेला - विमलादिगैन्द्री।
विषाद-हेतुर्भवति प्रतीची
तुषार-वाष्पेन विवर्णितास्या ॥ २ ॥

उद्दाम-रक्तोत्पलिनी च याम्या
प्रवर्षति प्रौढ-रति-प्रमोदान्।
भयं च निद्रां च तमोभिभूतां
दिगुत्तरा घोरतरा तनोति ॥ ३ ॥

धिक् ताः प्रवृत्तीर्गुणभाव-भिन्नाः
सर्वा अनाश्वासतया हतास्ताः।
शृणोमि मायामय-काल-वाहान्
ध्वनत्खुरानुद्धत - केसरांश्च ॥ ४ ॥

उपेक्ष्य संसार-भयं निमेषं
विलोकयेमं त्वयि रक्त-चित्तम् ।
परस्पराश्लेषमुपेत्य यावत्
समान-दोले हृदये भवेताम् ॥ ५ ॥

विस्रम्भ-सन्ध्या सघनायमाना
निमज्जयेत् प्रीति-वियोग-वेलाम् ।
विमुक्त-केशी दर-मीलिताक्षी
प्रियोन्मुखी विस्मर काल-वाहान् ॥ ६ ॥

× × ×

## युद्ध-काले विचारः

(तस्यैव)

यावन्नाडी स्फुरति सहसा जीर्णपाषाण-संस्थ-
स्तद्वैवर्ण्यं मनसि कलयन्नेकदा युद्ध-काले ।
वाताभुग्न-द्रुम-तल-गतो बुद्धवांस्तावदेव
भ्रान्तिर्नाना मनुज-गणना, जीवभूतं सदेकम् ॥

× × ×

## स्नेहः पापाशङ्की

(तस्यैव)

पण्याजीवगणं निजार्थ-निरतं मेघाननीकोद्यतान्
कुञ्जच्छाय-निलीन-मूषक-रुचो वारस्तुषारानिलान् ।
दृष्ट्वा भीतिमुपैति मे प्रियजनक्षेमाभिलाषान्मनः
पापाशङ्कितया हृदि प्रणयिनो गूढा ह्यशब्दा कृपा ॥

× × ×

## तव वार्धकम्

(तस्यैव)

यदा काले याते गत-तरुणिमा स्थास्यसि ननु
जरा-स्पृष्टैः केशैरुपहसनि तन्द्रालु-नयना।
तदा वाच्या मन्दं कविकृतिरियं द्रक्ष्यसि ततो
यथा स्वप्ने साक्षादसितमृदु-कान्ति निज-दृशोः ॥ १ ॥

अनेकेभ्यो रूपं तव रुचिरमाभाद् हास-ललितं
मृषा वा सत्यं वा त्वयि निदधति प्रीतिमितरे।
परन्त्वेकस्यैव प्रणय-विषयो दुःखकरुण-
स्तवात्मा संसारी भव-गहन-मार्गस्थ-चरणः ॥ २ ॥

अधोदृष्टिर्ध्यायेरनिमिषमुपाङ्गार–निकरे
विषादेन ब्रूयाः स्वगतमिव हा हन्त विरहः।
स्वयं यातो दूराद्रतिपतिरसौ दिव्य-वसति-
विहारी श्रृङ्गाणामुडु-निवह-गोपायित-तनुः ॥ ३ ॥

× × ×

## मृत्युः

(तस्यैव)

नाशं नैव भयं विदन्ति पशवः
कालेऽन्तिमे तामसाः,
जीवन्तोऽपि मृता भयेन पुरुषा
आशोक-सञ्जीवनाः।

तुच्छं प्राण-विसर्जनं प्रमिमते
धीरास्तु सत्वाधिकाः,
मृत्योर्नास्ति मनो-विकल्प-रचिताद्
बिम्बाद्धि तत्त्वान्तरम् ॥

× × ×

## वैजयन्तं प्रति वातपटोत्तोलनम्

### (तस्यैव)

न वृद्ध-जन-सेव्योऽयं देशो युव-जनोत्सवः।
जराजीर्णयुगोपेक्षी सौन्दर्योल्लास-तत्परः ॥ १ ॥

सागरः शाभते यत्र रोहितादिझषाकुलः।
वसुधामिषभक्ष्याढ्या खग-कूजित-पादपा ॥ २ ॥

जना विषयिणो यत्र संगीतादिव विस्मृताः।
अजर-प्रज्ञया व्यक्तं सत्सौधं क सनातनम् ॥ ३ ॥

स्थविरः पुरुषो नूनं न तुच्छाद् व्यतिरिच्यते।
यथावलम्बितो दण्डाद् जीर्णवस्त्रस्य कञ्चुकः ॥ ४ ॥

अतुच्छः सोऽथवा यावद् हृदयेनापराजितः।
खण्डितं खण्डितं नन्दन्नित्यतनुवाससः ॥ ५ ॥

उच्चादुच्चतरं गायन् पाणिभ्यां दत्ततालकः।
न गानं महिमानं तु स्वात्मनः परिशीलयन् ॥ ६ ॥

अथ सिद्धालयं नित्यं यक्षाणामिव वासतः।
वैजयन्तं पुरं यामि पवित्रं वसतेरितः ॥ ७ ॥

मुनयो विभ्राजमाना दिव्ये पूते विभावसौ।
भित्ताविव महारत्न-खचित-स्वर्ण-रूपिताः ॥ ८ ॥

आगच्छत महाभागा वह्नेरावर्तवर्तिनः।
आचार्या आत्मनो यूयमान्तरा इव गायनाः ॥ ९ ॥

विमलीक्रियतां चित्तं वासना-व्याधि-दूषितम्।
मुमूर्षु-पशु-देहेऽस्मिन् बद्धमज्ञं तथात्मनि ॥ १० ॥

शाश्वतं निजलोके मां गृह्णीत च बुधोत्तमाः।
प्रकृतेर्यद् विमुच्येय जरामरणबन्धनात् ॥ ११ ॥

विमुक्तो न ग्रहीष्यामि शरीरं पार्थिवं पुनः।
धारयिष्यामि सौवर्णं सुमृष्टं शिल्पिभिः कृतम् ॥ १२ ॥

सम्राडर्थं यथानघं यवन-द्वीपवासिभिः ।
निद्रालुरपि बुध्येत यत्प्रभा-चकितः क्षणात् ॥ १३ ॥

रूपं वा धारयिष्यामि हेमशाखावलम्बितम् ।
नयनोत्सव-सामग्रीं वैजयन्तनिवासिनाम् ॥ १४ ॥

अपूर्वं निस्सरेद्गानं यतो नित्यानुरञ्जकम् ।
भूत-भव्य-भवद्-भावि-कथा-वाचि सतत्त्वकम् ॥ १५ ॥

× × ×

## सैनिकः

(रूपर्टब्रुककविवरस्य)*

देहोऽयं पार्थिवो मे निपतति समरे
यत्र कुत्रापि देशे
कुर्यात्तत्क्षेत्र-लेशं प्रणिहित-रजसा
नूनमांग्लीयमेव ।
यस्याः प्राप्ता महिम्ना जनिरथ रुचिराः
प्राण-सौभाग्य-भोगाः
श्लाघ्या सा मातृ-भूमिः सुभग-वन-जला
चित्र-वातातपा च ॥ १ ॥

सौख्यं यत्तत्र लब्धं श्रुति-दृशि-मधुरं
जाग्रता स्वप्नजा वा
हास्यं सौहार्द-जन्यं शम-भर-हृदयं
मार्दवं यच्च दृष्टम् ।
तस्यैवोर्ध्वं मनो मे विगत-मलतया
नित्य-चित्-स्पन्द-शीलं
नूनं संस्कार-राशेर्वितरणनिरतं
क्वापि देशेऽनृणं स्यात् ॥ २ ॥

× × ×

* अयं कविः प्रथमविश्वयुद्धे हतो देशभक्तिसमार्द्रं चेदं काव्यम् ।

## गीतम्

(तस्यैव)

यथा समीरो हृदयं तथा मे
क्वचित् पथिप्रान्तगतः समीरः ।
क्रामत्पदो याति पुनः स्थितो वा
तत्रैव किञ्चिद् भ्रमयन्नथापि ॥

भ्रमत्यदृश्यः पुरतो नतश्च
श्रुतिं विधायैति च पृष्ठतोऽपि ।
विडम्बयन्नेति गभीर-मुद्रा-
मनन्त-लीला-ललितेषु लोलः ॥

यथा समीरो हृदयं तथा मेऽ-
प्यनुद्रुतं ते चरणानुसारि ।
मनोरथानां चिर-संचितानां
रजः-समुद्घात-परैकवृत्ति ॥

विवर्तयत्तत्प्रपदं विभाति
नृत्यान्तरे त्वामनुवर्तमानम् ।
न याति ते लोचन-गोचरत्वं
प्रतिष्ठसे दूरमुपेक्षयेव ॥



# अनुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६ अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "वित्त अधिकारी, सम्पूर्णानन्द-संस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ० प्र०)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२ (उ० प्र०)" इति सङ्केतेन विधेयः।



रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | डॉ॰ हरिश्चन्द्रमणि त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | डॉ॰ भागीरथप्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्रीगिरीशचन्द्र |
| | राष्ट्रियता | भारतीय |
| | पता | विजय प्रेस, सरसौली वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथप्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथप्रसाद त्रिपाठी
अनुसन्धानसंस्थाननिदेशक,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय
वाराणसी—२२१ ००२.

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **पण्डितपरिक्रमा ( प्रथमः स्तवकः )**—ग्रन्थरत्नमिदं षट्षष्ठ्युत्तराष्टादशशततम खैस्ताब्दत एकसप्तत्युत्तराष्टादशशततमखैस्ताब्दपर्यन्तं 'पण्डितपत्रिकायां' प्रकाशितानां विशिष्टसंस्कृतनिबन्धानां सङ्कलनरूपेण सुसम्पाद्य प्रकाशितम्— १६०—००

२. **खण्डप्रशस्तिः**—श्रीहनुमद्भिरचितमिदं ग्रन्थरत्नं 'पण्डितपरिक्रमायाः' द्वितीय-स्तबकरूपेण श्रीगुणविनयसूरिप्रणीतया 'तिलक'व्याख्यया समेधितं सत् प्रकाशितम्— ८०—००

३. **पण्डित रीविजिटेड**—ग्रन्थोऽयं षट्षष्ठ्युत्तराष्टादशशततमखैस्ताब्दतः षट्सप्तत्युत्तराष्टादशशततमखैस्ताब्दपर्यन्तं 'पण्डितपत्रिकायां' प्रकाशितानाङ्ग्लभाषानिबन्धान् सङ्कलय्य सुसम्पाद्य च प्रकाशितः— १९०—००

४. **रसमञ्जरी**—श्रीभानुदत्तविद्वद्भिर्विरचितोऽयं ग्रन्थः श्रीविश्वेश्वरकृतया 'समञ्जसा'व्याख्यया, अथ च श्रीजनार्दनपाण्डेयप्रणीतया 'सुखावबोधा'-व्याख्यया समलङ्कृत्य प्रकाशितः— ५०—००

५. **अस्तावलीयम्**—ग्रन्थोऽयं बहुशास्त्रमर्मज्ञैः आचार्यश्रीगोविन्दचन्द्रपाण्डेयैः प्रणीतः। ग्रन्थेऽस्मिन् पाश्चात्त्याङ्ग्ललेखकै रचितानां पद्यानां विशिष्टं संस्कृतपद्यरूपान्तरणं कृतम्— २०—००

६. **दानकेलिचिन्तामणिः**—अज्ञातकर्तृकोऽयं ग्रन्थः पण्डितश्रीगोपालशास्त्री-'दर्शनकेसरी'-विद्वद्भिः प्रणीतया 'सुबोधा'व्याख्यया सनाथीकृत्य प्रकाशितः— ४६-००

७. **पारिजातहरणचम्पूः**—महाकविशेषश्रीकृष्णविद्वद्भिर्विरचितोऽयं ग्रन्थः पाठभेदानालोच्य सर्वप्रथमं सम्पाद्य प्रकाशितः— ३२—००

८. **भक्तिदर्शनविमर्शः**—ग्रन्थोऽयं बहुशास्त्रमर्मज्ञैः आचार्यश्रीगोविन्दचन्द्र-पाण्डेयमहोदयैः स्वोपज्ञतया प्रणीतः— ४०—००

९. **तत्त्वचिन्तामणिः ( प्रत्यक्षखण्डे प्रथमो भागः )**—म० म० गङ्गेशोपाध्याय-विद्वद्भिर्विरचितमिदं ग्रन्थरत्नम् 'आलोक'–'दर्पण'–'माथुरी' इत्येताभिस्तिसृभिष्टीकाभिः समेधितं सत् प्रकाशितम्— १३२—००

१०. **कच्चायनव्याकरणम्**—श्रीकच्चायनमहाथेरविद्वद्भिर्विरचितोऽयं ग्रन्थो महाविजिताविथेरप्रणीतया 'कच्चायनवण्णना' व्याख्यया सनाथीकृत्य प्रकाशितः— ८०—००

११ **नाट्यशास्त्रम्**—आचार्यभरतमुनिप्रणीतमिदं ग्रन्थरत्नम् आचार्याभिनवगुप्तकृतया 'अभिनवभारती'-संस्कृतव्याख्यया, अथ च पण्डितश्रीपारसनाथ-द्विवेदिकृतया 'मनोरमा'–हिन्दीव्याख्यया समलङ्कृत्य प्रकाशितम्:— २००—००

१२. **श्रीत्रिपुरार्णवतन्त्रम्**—ग्रन्थरत्नमिदं विविधाभिः टिप्पणीभिः, अथ च गभीरया भूमिकया सम्भूष्य प्रकाशितम्— ९६—००

१३. **गौतमीयमहातन्त्रम्**—ग्रन्थोऽयं पाठभेदानालोच्य विविधैः परिशिष्टैः, अथ च गम्भीरया भूमिकया समलङ्कृत्य प्रकाशितः— ८०—००

१४. **कौटलीयमर्थशास्त्रम्**—आचार्यविष्णुगुप्तेन प्रणीतमिदं ग्रन्थरत्नं प्राचीनार्वाचीनविद्वद्भिः प्रणीताभिष्टीकापञ्चकोपेतम्—

प्रथमभागस्य प्रथमसम्पुटम्—१४०—००
प्रथमभागस्य द्वितीयसम्पुटम्—११६—००
द्वितीयभागस्य प्रथमसम्पुटम्—१६०—००
द्वितीयभागस्य द्वितीयसम्पुटम्—९०—००

पत्रव्यवहारसङ्केतः–प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी–२२१ ००२